अथत्रैराशिकस्वामिनमाह त्रिराशिपाइति दिनेदिवावर्षप्रवेशेमेषाच्चतुर्णांराशीनांसूर्यसितार्किशुक्राः स्वामिनःस्युः तद्यथा दिवावर्षप्रवेशे मेषलग्नंतदासूर्यः वृषस्यशुक्रः मिथुनस्यार्किःशनिः कर्कस्यशुक्रः निशिरात्रौवर्षप्रवेशेमेषादीनांचतुर्णांराशीनांईज्येंदुबुधक्ष्माजाः स्वामिनः तद्यथा रात्रौमेषलग्नेस्वामीगुरुः वृषस्यचंद्रः मिथुनस्यबुधः कर्कस्यभौमः एतेहरिभात् सिंहाच्चतुर्णांराशीनांविलोमंविपरीतंज्ञेयम् मेषादीनां

| इदंत्रैराशिकस्वामियंत्रम् | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | |
| सू | शु | श | शु | गु | चं | बु | मं | श | मं | गु | चं | दिवा |
| गु | चं | बु | मं | र | शु | श | शु | श | मं | गु | चं | रात्रौ |

त्रिराशिपाःसूर्यसितार्किशुक्रादिनेनिशीज्येंदुबुधक्ष्माजाः
मेषाच्चतुर्णांहरिभाद्विलोमंनित्यंपरेष्वार्किकुजेज्यचंद्राः ६०

येदिनेशास्तेसिंहादीनांरात्रावीशाः येमेषादीनांरात्रीशास्तेसिंहादीनांदिनेशाइत्यर्थः तद्यथा दिनेसिंहलग्नस्यगुरुः कन्यायाश्चंद्रःतुलायाबुधः वृश्चिकस्यभौमः रात्रौसिंहस्यसूर्यः कन्यायाःशुक्रःतुलायाःशनिः वृश्चिकस्यशुक्रः परेषुधनराशिषुचतुर्षुराशिषु नित्यम् सदादिवारात्रौवर्षप्रवेशे- अर्किकुजेज्यचंद्राःस्वामिनः तद्यथाधनुषःशनिःमकरस्यभौमःकुंभस्यगुरुःमीनस्यचंद्रःअनयोर्दिवारात्रौवर्षप्रवेशेसति विपर्ययोनास्तीत्यर्थः ६०

अथैतस्यप्रयोजनमाह वर्षेशार्थमिति एतेवर्षेशार्थंवर्षेशनिर्णयार्थंद्दिननिशाविभागेनत्रिराशिपाउक्ताः पंचवर्गीबलाद्यर्थंपूर्वोक्तान्द्रेष्काणेशान् वि चिंतयेत् ६१ ७ अथक्रमप्राप्तोदाहरणप्रदर्शनार्थंवर्षतंत्रोक्तंचतुर्भिः श्लोकैर्वर्षेशनिर्णयमाह तत्रादौअधिकारिणश्चाह जन्मेति 
जन्मलग्नपतिः जन्मलग्नस्वामी अब्दलग्नपोवर्षलग्नस्वामी मुंथहाधिपोमुंथहास्वामी त्रिराशिपः त्रैराशिकस्वामी सूर्यसितार्किशुक्रा इत्या

वर्षेशार्थंदिननिशाविभागोक्तास्त्रिराशिपाः पंचवर्गीबलाद्यर्थंद्रेष्काणेशान्विचिंतयेत् ६१ ७
इतिसंज्ञाविवेकेग्रहप्रकरणंसमाप्तम् १ जन्मलग्नपतिरब्दलग्नपोमुंथहाधिपइतस्त्रिराशिपः सूर्य
राशिपतिरन्हिचंद्रमाधीश्वरोनिशिविमृश्यपंचकम् १ बलीयएषांतनुवीक्षमाणःसवर्षपोलग्नमनीक्षमाणः २

दिनात्रैराशिकेश्वरोज्ञेयः अह्निदिवावर्षप्रवेशेसूर्यराशिपतिदिनेशोज्ञेयः निशिरात्रौवर्षप्रवेशेसतिचंद्रमाअधीश्वरः चंद्राधिष्ठितराशीशोज्ञे
यः सएवरात्रिस्वामीज्ञेयः अनयारीत्याग्रहपंचकंविमृश्यविचार्य १ एवंपंचाधिकारिणोज्ञात्वातेषांदृग्बलंपंचवर्गीबलंचज्ञात्वा वर्षपति- २०
निर्णयमाह बलीयइति एषांपंचानामधिकारिणांमध्येयोग्रहोबलीपंचवर्ग्यांबलाधिकः तनुंलग्नंईक्षमाणः पश्यति सवर्षपोवर्ष-

स्वामीज्ञेयः बलिष्ठोऽपिग्रहोलग्नमनीक्षमाणः लग्नंनपश्यतितदावर्षाधिपोनैवस्यात् यदाबलस्यसाम्येपंचवर्ग्यासर्वेतुल्यबलास्तदाहस्य
तिरेकतःस्यात् यथायोऽधिकहस्याल्लग्नंपश्यतिसवर्षाधीशइत्येवमाद्याविदुःवदंति २ हष्टिसाम्येन्चाह हगिति सर्वेषांहक्साम्ये-
हष्टिसाम्येऽपि आदिशब्दाद्बलसाम्येऽथवानिर्बलत्वेवर्षाधिपः वर्षेश्वरः मुथहेश्वरःस्यात् चेत्पंचाधिकारिणः सबलायद्यपितनुंलग्नंनेक्ष
माणाःनपश्यंति तथापिवीर्याधिकः अंकतःयस्यैवंबलमधिकंसएवाब्दस्यवर्षस्यविभुः स्वामीविचिंत्यः ३ अथकेनाचिन्मतेनहष्टिब

हगादिसाम्येप्यथनिर्बलत्वेवर्षाधिपःस्यान्मुथहेश्वरस्तु पंचापिचेन्नोतनुमीक्षमाणावीर्याधिकोब्दस्यविभुर्विचिंत्यः ३
बलादिसाम्येरविराशिपोह्निनिशींदुराशीडितिकेचिदाहुः येनेऽथशालोऽब्दविभुःशशीसवर्षाधिपश्चंद्रभपोन्यथात्वे ४

लसाम्येवर्षाधिपतिनिर्णयमाह बलादीति बलसाम्येआदिशब्दाद्दृष्टिसाम्येच अह्निदिवावर्षप्रवेशेरविराशिपः रव्याक्रांतराशीश्वरोज्ञेयः
निशिरात्रौवर्षप्रवेशेइंदुराशीट्चंद्राक्रांतराशीश्वरोवर्षाधीश्वरोज्ञेयइतिकेचिदाहुः अथोत्तरार्द्धेविशेषमाह येनेत्थशालइति यदुक्तप्रकारेण
शशीचंद्रः अब्दविभुः वर्षस्वामीजातः सयदियेनपंचाधिकारीमध्यस्थितेनग्रहेणसइत्थशालंकुरुते तदासएववर्षाधिपः वर्षस्वामी-
कल्प्यः अन्यथात्वेशालयोगाभावेचंद्रभपश्चंद्राक्रांतराशीश्वरोवर्षाधिपोज्ञेयः ४ ५ ५ ५ ५

अथमुंथानयनमाह स्वेति यदाजन्मजातंतस्मिन् समयेयल्लग्नंतदासैवमुथहा सामुथहास्वजन्मलग्नात्प्रतिवर्षंएकैकराशिलब्ध्याक्रमति तद्यथा
जन्मलग्नंकन्याजन्मसमयेतत्रैवमुथहा द्वितीयवर्षेतुलायामित्यादिर्मुथहोत्पत्तिप्रकारइष्टवर्षेभवति अथमुथहानयनम् राश्यादिस्वजन्मलग्नं-
यातशरद्युतंजन्मकालाद्गतवर्षगणेनयुक्तं द्वादशभिस्तष्टंसाशेषप्रमिताप्रमुखाराश्यादिरिष्टवर्गेइंथिहामुथहास्यात् उदाहरणम् जन्मलग्नम्
५।१०।५३।५० गतवर्षगणेनयुक्तम् ४२।१०।५३।५० द्वादशभिस्तष्टम् शेषांकप्रमिताजाताराश्यादिर्मुथहा ६।१०।५३।५०॥५॥ अथराहोर्मुखपृष्ठ

स्वजन्मलग्नात्प्रतिवर्षमेकैकराशिभागान्मुथहाक्रमेण स्वजन्मलग्नंरवितष्टजातंशरद्युतंसाप्रमुखेथिहास्या
त् ५ भोग्याराहोर्लवास्तस्यमुखपृष्ठगतालवाः ततःसप्तमंपुच्छंविमृश्येतिफलंवदेत् ६ पुच्छानांलक्षणमाह भो

ग्येति यस्मिन्राशौराहुरस्तितेनवक्रगतिनायेभोग्या अंशास्तेमुखसंज्ञाः येगतालवाः भुक्तलवाः तेपुच्छसंज्ञाः ततःसप्तमंभवनंततोराहोःसप्तमं
सप्तमराशिः पुच्छसंज्ञकइतिविमृश्यविचार्यमुथहायाः फलंवदेत् अथोक्तप्रकारेणवर्षेशनिर्णयः तत्रादौजन्मलग्नेशोबुधः वर्षलग्नेशोभौमः मुं
थहेशोभृगुः त्रैराशिकेशः सूर्यःदिनेशः शनिः पञ्चानांमध्येबलिष्ठः शनिः पूर्णदृष्ट्यालग्नंपश्यति अतोवर्षेशःशनिः ६ ७ इतिदिवाकरदैव
ज्ञात्मजविश्वनाथदैवज्ञविरचितेश्रीनीलकंठज्योतिर्वित्कृतसंज्ञातंत्रेग्रहाध्यायः समाप्तः ॥ ॥ ॥ ॥

अथग्रहाणांस्वरूपम् तत्रादौसूर्यस्यस्वरूपमाह सूर्यइति सूर्यएतादृशोज्ञेयः नृपःक्षत्रियःनापुरुषग्रहः चतुरस्रः चतुष्कोणाकृतिः मध्यंदि
नंमध्याह्नकालेप्रबलः इंद्रदिक्पूर्वदिक्स्वामी स्वर्णंसुवर्णद्रव्यस्वामी चतुष्पदामश्वगजादीनांप्रभुःउग्रःक्रूरः सत्वंसत्वप्रधानः स्थिरः स्थिरस्व
भावः तिक्तातिक्तरसप्रियः पशुक्षितिः गोभूमिचारी पित्तंपित्तप्रकृतिः जरन्वृद्धः पाटलः श्वेतरक्तमिश्रितवर्णः मूलंमूलोत्पन्नस्यधान्यादेर

श्रीगर्गान्वयभूषणंगणितविच्चिंतामणिस्तत्सुतोऽनंतोऽनंतमतिर्व्यधात्खलमतध्वस्त्यैजनुःपद्धतिम् तत्सूनुःखलुनीलकंठ
विबुधोविद्वच्छिवानुज्ञयासंतुष्ट्यैव्यदधाद्ग्रहप्रकरणंसंज्ञाविवेकेऽमलम् ७ सूर्योनृपोनाचतुरस्रमध्यंदिनेंद्रदिक्स्व
र्णचतुष्पदोऽग्रः सत्वस्थिरस्तिक्तपशुक्षितिस्तुपित्तंजरन्पाटलमूलवन्यः १ वैश्यःशशीस्त्रीजलभूस्तपस्वीगौरोपराह्णा
बुग्धातुसत्वम् वायव्यदिक्श्लेष्मभुजंगरूप्यस्थूलोयुवाक्षारशुभ्रःसिताभः २

धिष्ठितावन्योवनचारी एवंगुणविशिष्टःसूर्यः१
अथचंद्रस्वरूपमाह शशीचंद्रः वैश्यः वैश्यजातिः स्त्रीस्त्रीग्रहःजलभूरार्द्रभूमिचारी तपस्वी गौरः गौरवर्णः अपराह्णः अपराह्णकालेप्रबलः अंबु
गोजलचारी धातुर्गैरिकादिः सत्वंसत्वप्रधानः वायव्यदिक् वायव्यदिक्स्वामी श्लेष्माश्लेष्मप्रधानः भुजंगः भुजंगस्वामी रूप्यंरूप्यद्रव्यस्वामी
स्थूलोऽतिपुष्टः युवातरुणः क्षारःलवणरसप्रधानः शुभ्रःशुभ्रग्रहःसिताभः शुभ्रवर्णः एवंविधश्चंद्रोज्ञेयः २ ७ ७

अथभौमस्वरूपमाह भौमइति एतादृशोभौमोज्ञेयः तमः तमोगुणप्रधानः पित्तं पित्तप्रकृतिः युवा तरुणः उग्रः क्रूरः वन्यो वनचारी मध्याह्नः मध्याह्नकालेप्रबलः धातुः गैरिकादिः यमदिक् दक्षिणदिक्स्वामी चतुष्पाच्चतुष्पदानामश्वादीनांप्रभुः नापुरुषराशिः राट् राजाक्षत्रियः चतुष्कोणः चतुष्कोणाकृतिः सुवर्णकारः सुवर्णकाराणांस्वामी दग्धाऽवनीज्वलितभूमिचारी व्यंगः किंचिदंगरहितः कटुः कटुरसप्रियः रक्तस्ताम्रवर्णः

भौमस्तमःपित्तयुवोग्रवन्योमध्याह्नधातुर्यमदिक्चतुष्पात् नाराट्चतुष्कोणसुवर्णकारोदग्धाऽवनीव्यं
गकटुश्चरक्तः ३ ग्राम्यःशुभोनीलसुवर्णवृत्तः शिशुश्चिकांचःसमधातुजीवः श्मशानयोषोत्तरदिक्प्रभातशू
द्रःखगःसर्वरसोरजोज्ञः ४

रक्तवर्णद्रव्यस्वामी ३ अथबुधस्वरूपमाह ग्राम्यइति ग्राम्यःग्रामचारी शुभः सौम्यः नीलः नीलवर्णः सुवर्णः सुवर्णद्रव्यस्वामी वृत्तोवर्तुलाकृतिः शिशुर्बालकः इषुकांचइषुकांचसंचारी समधातुर्वातपित्तकफात्मकः जीवोमनुष्यादिः श्मशानंयत्रशवदहनंभवतिततूस्थलचारी योषास्त्रीग्रहः उत्तरादिगुत्तरदिक्स्वामी प्रभातेप्रातःकालेसबलः शूद्रः शूद्रजातिः खगः पक्षिजातिः सर्वरसः कट्वादिसकलरसप्रधानः रजोरजोगुणप्रधानः ज्ञोबुधः एवंगुणविशिष्टोज्ञेयः ४ ७ ७

अथगुरुस्वरूपमाह गुरुरिति एतादृशोगुरुः प्रभातेप्रातःकालेप्रबलः नापुरुषः शुभःसौम्यग्रहः ईशदिगीशानदिक्स्वामी द्विजोब्राह्मणः पीतः पीतवर्णःद्विपात् द्विपदानांस्वामी ग्राम्यः ग्रामचारी सुवृत्तोवर्तुलाकृतिः जीवोमनुष्यादिः वाणिज्यंवणिक्कर्मकर्ता माधुर्यंमधुररसप्रियः सुराल-लयेशोदेवतागृहस्वामी वृद्धः वृद्धग्रहः सुरत्नंशोभनरत्नद्रव्यस्वामी समधातुर्वातपित्तकफात्मकः सत्वंसत्वगुणप्रधानः ५ अथ-

गुरुःप्रभातेनृशुभेशदिक्द्विजःपीतोद्विपाद्ग्राम्यसुवृत्तजीवः वाणिज्यमाधुर्यसुरालयेशो
वृद्धःसुरत्नसमधातुसत्वम् ५ शुक्रःशुभस्त्रीजलगोऽपराह्णःश्वेतःकफीरूप्यरजोऽ
म्लमूलम् विप्रोऽग्निदिङ्मध्यवयारतीशोजलावनीस्निग्धरुचिर्द्विपाच्च ६ ७

शुक्रस्वरूपमाह शुक्रएतादृशोज्ञेयः शुभःशुभग्रहः स्त्रीस्त्रीग्रहः जलगोजलचारी अपराह्णः अपराह्णकालेप्रबलः श्वेतः शुभ्रवर्णःक-फीकफप्रकृतिः रूप्यंरूप्यद्रव्यस्वामी रजःरजोगुणप्रधानः अम्लःआम्लरसप्रियः मूलंमूलोत्पन्नस्यधान्यादेःस्वामीविप्रोब्राह्मणः अग्निदिगाग्नेयदि-क्स्वामी मध्यवयाः तरुणःरतीशःक्रीडारसप्रधानःजलावनीजलभूमिचारी स्निग्धरुचिःश्लक्ष्णकांतिःद्विपाद्विपदानांमनुष्यादीनांस्वामी ६

अथशनिस्वरूपमाह शनिरिति शनिरेताहशः विहंगः पक्षिजातिः अनिलोवायुचारी वन्योवनचारी संध्यासंध्याकालेप्रबलः शूद्रः शूद्रजातिः अंगनास्त्रीग्रहः धातुसमः वातपित्तकफात्मकः स्थिरःस्थिरस्वभावः क्रूरः पापग्रहः प्रतीची पश्चिमदिक्स्वामी तुवरः कषायरसप्रियः अतिवृद्धः अत्यंतवृद्धग्रहः उत्कर क्षितिद् उत्करभूस्वामी दीर्घः दीर्घाकृतिः सुनीलः ऋष्णुनीलवर्णः लोहंलोहस्यस्वामी ७ अथराहुस्वरूपं शनिवत्तत्रकिं

शनिर्विहंगोऽनिलवन्यसंध्याशूद्रांगनाधातुसमःस्थिरश्च क्रूरःप्रतीचीतुवरोऽतिवृद्धोत्करक्षितीद्दी
र्घसुनीललोहम् ७ राहुस्वरूपंशनिवन्निषादजातिर्भुजगोऽस्थिपनैर्ऋतीशः केतुःशिखीत-
द्वदनेकरूपःखगस्वरूपात् फलमूह्यमित्थम् ८

न्विद्विशेषोऽस्तीत्याह राह्विति निषादजातिश्चांडालविशेषः भुजंगः सर्परूपः अस्थिपोऽस्थिस्वामी नैर्ऋतीशः नैर्ऋतिदिक्पतिः अथकेतुस्वरूपम् शनिराहुवत् परंत्वेतावान् विशेषःकेतुः शिखी शिखावान् अनेकरूपः नानाविधरूपः इत्थममुनाप्रकारेण ग्रहस्वरूपात् फलमूह्यम् ज्ञेयम् ८ छ छ छ

अथदृष्टिमाह तत्रग्रहाणांचतुर्विधादृष्टिः एकाप्रत्यक्षस्नेहा द्वितीयागुप्तस्नेहा तृतीयागुप्तवैरा चतुर्थीप्रत्यक्षवैरा तत्रादौस्नेहदृष्टिमाह दृष्टि रिति कुंडल्यांग्रहः स्वक्रांतस्थानान्नवपंचमेनवमस्थानस्थंग्रहंपंचमस्थानस्थंग्रहंपश्यतिसादृष्टिर्बलवतीप्रत्यक्षतः स्नेहदाप्रीतिदा पादोना सादृष्टिः चतुर्थांशन्यूनापंचचत्वारिंशत्कलात्मिका ४५ अखिलानांसमस्तानांकार्याणांसाधनंसंपत्तिंकरोति मेलापकाख्यापरस्परप्रीति

दृष्टिःस्यान्नवपंचमेबलवतीप्रत्यक्षतःस्नेहदापादोनाऽखिलकार्यसाधनकरीमेलापकाख्योच्यते गुप्तस्नेहकरीतृतीयभवने
कार्यस्यसंसिद्धिदात्र्यंशोनाकथितातृतीयभवनेषड्भागदृष्टिर्भवे ९ दृष्टिःपादमिताचतुर्थदशमेगुप्तारिभावास्मृताऽन्योऽ
न्यंसप्तमभेतथैकभवनेप्रत्यक्षवैराऽखिला दुष्टेहक्त्रितयंक्षुतात्क्षयमिदंकार्यस्यविध्वंसदंसंग्रामादिकलिप्रदंदृशइमाः
स्युर्द्वादशांशांतरे १०

कारिणी इत्येकादृष्टिः अथस्वाक्रांतस्थानाद्ग्रहस्तृतीयस्थानस्थंग्रहंयत्पश्यतिसादृष्टिर्गुप्तस्नेहकरी-कार्यस्यसंसिद्धिदाभवति सादृष्टिस्तृतीयभवनेत्र्यंशोनाचत्वारिंशत्कलात्मिका ४० कथिताभवेएकादशस्थानेषड्भागः षडंशदशकलात्मिकादृष्टिःस्यात् ९ अथग्रहाणांशत्रुदृष्टिमाह दृष्टिःपादमितेति स्वाक्रांतस्थानाद्ग्रहश्चतुर्थस्थानस्थंग्रहंयत्पश्यति सादृष्टिर्गुप्तारि भावा अप्रकाशितशत्रुभावास्मृता पादमिताचतुर्थांशमितापंचदशकलात्मिकादृष्टिः तथाऽन्योऽन्यंपरस्परंसप्तमभेसप्तमराशौतथैक

भवनेएकराशावपिग्रहोयत्पश्यतिसादृष्टिः प्रत्यक्षवैरा अखिलासंपूर्णादृष्टिः ६० कलात्मिकास्यात् इदंदृष्टित्रितयंचतुर्थदशमरूपमेवंसप्त सप्तकरूपंद्वितीयमेकराशिगतंतृतीयमेवमिदंदृष्टित्रयंकुताह्वयसकलशुभकर्मनाशकं इदमपिदृष्टित्रयंकार्यस्याभीष्टस्यविध्वंसदं किं च संग्रामादि संग्रामोयुद्धंतत्प्रभृतिककलिप्रदंयुद्धकारकंक्लेशंप्रददाति इमादृशोद्वादशांशांतरेद्रष्टृदृश्यांतरंद्वादशभागानधिकंतदा यथोक्तफलदाःस्युः १० अथगणितागतदृष्टिसाधनमाह आपास्येतितिथ्यइतिच योग्रहःपश्यतिसद्रष्टा यंपश्यतिसदृश्यइत्यवलोक्य पश्य

अपास्यपश्यंनिजदृश्यखेटादेकादिशेषेध्रुवलिप्तिकाःस्युः पूर्णंखवेदास्तिथयोऽक्षवेदाः खंषष्टिरभ्रंशरवेदसंख्या ११
तिथ्यःखचंद्रावियदभ्रतर्काः शेषांकयातैष्यविशेषघातात् लब्धंखरामै३०रधिकोनकैष्यैः स्वर्णंभवेत्स्फुटदृष्टिलिप्ताः १२

द्रष्टारं ग्रहंनिजदृश्यखेटात् अपास्यशोध्य यद्राश्यादिशेषंतिष्ठति यस्मिन्नेकादिशेषात्मकेध्रुवाः स्थिराः लिप्तिकाः दृष्टिकलाः पूर्णमित्यादिकाःस्युः तद्यथा द्रष्टारहितदृश्यग्रहस्यराशिस्थानेएकस्मिन्शेषेपूर्णंशून्यंदृष्टिः द्विशेषेखवेदाश्चत्वारिंशत् ४० त्रिशेषेतिथयः पंचदश १५ चतुःशेषेऽक्षवेदाः ४५ पंचचत्वारिंशत् पंचशेषेखंशून्यं ० षट्शेषेषष्टि ६० सप्तशेषेअभ्रंशून्यं ० अष्टशेषेशरवेदसंख्या पंचचत्वारिंशत् ४५ नवशेषेतिथ्यः पंचदश १५ दशशेषेखचंद्राः १० एकादशशेषेवियच्छून्यं द्वादशशेषेशून्यशेषेवाऽभ्रतर्काः षष्टि ६०

शेषांशेतिद्रष्टारहितदृश्यस्यराशिस्थानेयोंकः प्राप्तः सस्थाप्ययातैष्ययोर्गतगम्ययोर्विशेषांतरंकार्यम् तद्यथा राशिस्थानेयोंकः प्राप्तः सयातसंज्ञकः तस्याग्रिमांकोयः सएष्यसंज्ञकः तयोरंतरंकार्यम् तेनांतरेणशेषांशाः गुण्याःततःखरामैस्त्रिंशद्भि ३० भक्तेयल्लब्धंकलादिकंतत् ध्रुवेराशिस्थानेप्राप्तांकेस्वर्णंकार्यम् कदाचाधिकोनकेष्येसतियदा अग्रिमोध्रुवः प्राग्ध्रुवादधिकोभवेत् तदाधनम् यदोनोऽग्रिमध्रुवस्तदा ऋणंएवंसतिताः स्फुटाः दृष्टिलिप्ताः कलाःस्युः उदाहरणम् द्रष्टाचंद्रः ५।२२।९।४७ दृश्योरविः ९।७।३०।६ द्रष्टारहितदृश्यः ३।१५।२०।१९

पश्यन्मित्रदृशासुहृद्द्विपुदृशाशत्रुःसमस्त्वन्यथातिथ्यर्काष्टनगांकशैलखचराः १५।१२।८।७।९।७।९
सूर्यादिदीप्तांशकाः चक्रवामदृगुच्यतेबलवतीमध्याद्ययावेश्मनीत्येकर्क्षेऽपिदृगुच्यतेऽर्थजननीत्येकेविदुःसूरयः १३

| दृष्टिध्रुवांकाः सांतराः लिख्यते | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| राशयः | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |
| ध्रुवांकाः | ० | ४० | १५ | ४५ | ० | ६० | ० | ४५ | १५ | १० | ० | ६० |
| अंतरांकाः | ४० | २५ | ३० | ४५ | ६० | ६० | ४५ | ३५ | ५ | १० | ६० | ६० |
| | ध॰ | ऋ॰ | ध॰ | ऋ॰ | ध॰ | ऋ॰ | ध॰ | ऋ॰ | ध॰ | ऋ॰ | ध॰ | ऋ॰ |

अस्यराशिस्थानेत्रयोंकाः त्रयाणामधः पंचदशध्रुवांकः प्राप्तः १५ अग्रिमोंकः पंचचत्वारिंशत् ४५ अनयोरंतरेण ३० शेषांकाः १५।२०।१९ गुणिताःजाताः ४६०।३० त्रिंशद्भक्ताः लब्धं १५।२० इदमग्रिमस्यांकस्याधिकत्वात्पंचदश १५ मध्येयुतंजातास्सूर्योपरिचंद्रस्यकलात्मिकादृष्टिः ३०।२० एवंसर्वग्रहाणामपिज्ञेयम् १२ अथग्रहमैत्रीचक्रमाह पश्यन्निति

योग्रहोयंग्रहंमित्रदृशामित्रदृस्थानवपंचमतृतीयैकादशदृष्ट्यापश्यति सग्रहस्तंप्रतिसुहृन्मित्रंज्ञेयः योग्रहोरिपुदृशाशत्रुदृष्ट्याचतुर्थदशमैकसप्तमदृष्ट्यापश्यति सतंप्रतिशत्रुर्ज्ञेयः अन्यथामित्रशत्रुदृष्ट्यभावेपरिशेषाद्द्वितीयषष्ठाष्टमद्वादशस्थानेषु समताभवति अत्रार्थेसंमतिवाक्यम् तथाचरोमकः मित्रंतृतीयपंचमनवमैकादशगतोऽपियोयस्य धनमृतिरिपुरिःफेषुचसमोग्रहःस्यादितिज्ञेयम् १ शत्रुस्तथैकतुर्येजायास्थानेतथादशमे ताजिकहिल्लाजमतेनैतादृक्कथितमस्मापिः २ अत्रमित्रसमशत्रुविचारेनवपंचमादिस्थानेदृष्टिरेवग्राह्या अत्रसमेद्व्यादिस्थानेषु यद्यपिगणितागतदृष्टिरायाति तथापिसानग्राह्या कुतःदृष्ट्यभावेनसमतोक्तागणितागतदृष्टौसत्यांसमताया अभावःस्यादितिहेतुरितिकेचित् वस्तुतस्तु अत्रग्रहयोरेकपंचसप्तैकादशांतरयोस्तुल्यभागाद्यवयवयोर्गणितागतदृष्टेरभावः यथादृष्टाचंद्रः १।३।२०।५० दृश्योबुधः २।३।२०।५० वाबुधः ६।३।२०।५० वाबुधः ८।३।२०।५० एवंकदाचित् ०।३।२०।५० एवंकदाचित्संभवतीति ग्रंथांतरेसमानोक्ता अथसूर्यादीनांदीप्तांशानाह तिथीति सूर्यस्यतिथयःपंचदश १५ चंद्रस्यार्का द्वादश १२ भौमस्याष्टौ ८ बुधस्यनगाःसप्त ७ गुरोरंकानव ९ शुक्रस्यशैलाःसप्त ७ शनेःखचराःनव ९ सूर्यादीनांग्रहाणामेतेदीप्तांशकाः

ग्रहदृष्टियंत्रम्.

| | र | चं | मं | बु | गु | शु | श |
|---|---|---|---|---|---|---|---|
| र | ० ० | ३० ३० | १४ ५ | ९ ३२ | ४४ १० | ४ १९ | १५ ४१ |
| चं | ३० २० | ० ० | २१ २१ | २३ १५ | २२ २५ | ३८ १ | ३० ४१ |
| मं | १४ ५ | १३ ४४ | ० ० | ५५ २७ | १९ ५४ | १९ ५८ | ११ १७ |
| बु | ९ ३३ | १३ २४ | ५५ २७ | ० ० | २५ २१ | २४ ३९ | १० ५४ |
| गु | ४४ १० | २२ ३५ | २९ ५४ | २५ २९ | ० ० | १ ४१ | १३ ४७ |
| शु | १७ १३ | १० २४ | १९ ५८ | २८ ३१ | ६ ४४ | ० ० | ५ ५४ |
| श | १५ ४१ | ३२ ४९ | ३३ ३३ | ३५ २७ | २१ १ | २६ ५६ | ० ० |

ज्ञेयाः अथदृष्टौकश्चिद्विशेषउच्यते चक्रइति चक्रेलग्नादिद्वादशराशिचक्रेवामदृग्बलवतीज्ञेया दक्षिणदृष्ट्यपेक्षयेत्यर्थः वामस्थवामस्था-
नस्थग्रहस्यदृक्वामदृक् वामभागस्थग्रहस्यदक्षिणभागस्थग्रहोपरियादृष्टिः साबलवती लग्नादिषष्ठांतंदक्षिणविभागःसप्तमादिद्वादशांतं
वामविभागः तदुक्तंबृहज्जातके कंद्यगित्यादिश्लोकेवामुदितैरितिराशिभिरुदितैर्दृश्यभागावस्थितैर्वामांगविभागःलग्नस्योदितभागास्तथा
द्वादशैकादशदशमनवमाष्टमाः सप्तमस्यराशेः लग्नानुदिततुल्यभागाः एषउदितोविभागः अयमेववामविभागःशेषोऽनुदितः अर्थादनु-
दितैरदृश्यैर्दक्षिणोविभागः तत्रलग्नास्युदितभागाः द्वितीयतृतीयचतुर्थपंचमषष्ठाः सप्तमराशेर्लग्नोदिततुल्यविभागइत्यनुदितोविभागः
एषदक्षिणोविभागः इतिभट्टोत्पलः चक्रेवामदृगुच्यतेबलवतीत्यत्रकिंचिदेकमुदाहरणमाह मध्यादिति मध्याद्दशमस्थानाद्हिबुकेचतुर्थे
स्थानेयादृष्टिः साबलवतीत्युक्तंभवति दशमस्थानस्थितग्रहस्यचतुर्थस्थानस्थितग्रहोपरियादृष्टिः साबलवतीत्यर्थः चतुर्थस्थानस्थित
ग्रहस्यदशमस्थानस्थितग्रहोपरियादृष्टिःसानिर्बलेत्यर्थत्वात्सूचितं सप्तमादिद्वादशस्थानस्थितानांग्रहाणांलग्नादिषष्ठातस्थानस्थिते
षुग्रहेषुयादृष्टिः साबलवतीतिनिर्दिष्टार्थः समरसिंहस्याप्ययमेवार्थः तद्यथा चक्रस्यवामदृष्टेर्दक्षिणदृष्टिर्बलीयसीज्ञेया भूकेंद्रोपरिदृष्टि
मध्यात्सबलेतिसर्वतोप्यूह्यमिति वामदृष्टिरित्यत्रसप्तमीतत्पुरुषः समासःवामेदृष्टिर्वामदृष्टिः दक्षिणेदृष्टिर्दक्षिणदृष्टिः दक्षिणभागस्थिता
नांग्रहाणांयावामभागस्थग्रहेषुदृष्टिस्तदपेक्षयावामभागस्थग्रहाणांदक्षिणभागस्थग्रहोपरियादृष्टिः साबलवतीत्यर्थः अत्रोदाहरणम्

मूर्केंद्रेति मध्याद्दशमस्थानाद्भूकेंद्रोपरिचतुर्थोपरियादृष्टिःसाबलवती एवंसर्वतोऽपिससमादिद्वादशांतस्थानस्थितानांलग्नादिषष्ठांत-स्थानस्थितेषुग्रहेषुयादृष्टिः साबलवतीत्यूह्यम् विचार्यम् श्रीकेशवदैवज्ञस्याप्ययमेवार्थः तद्यथा परार्द्धखगदृक्प्राकृजार्द्धदृक्कोधिकेति परार्द्धखगस्यदृक् लग्नादिषष्ठांतंपूर्वार्द्धम् ससमादिद्वादशांतमपरार्द्धमिति अथैकस्थानदृष्टौमतांतरमाह एकर्क्षेपीति एकर्क्षेएकराशिस्थितयोर्द्व-श्यद्रष्ट्रोः परस्परंयादृग्दृष्टिः साअर्थजननी अत्यंतलाभपूर्वकशुभफलदात्रीज्ञेया इत्येकेसूरयः पंडितास्ताजिकशास्त्रवेत्तारोविदुः १३ अथ

पुरःपृष्ठेस्वदीप्तांशैर्विशिष्टंदृक्फलंग्रहः दद्यादतिक्रमेतेषांमध्यमंदृक्फलंविदुः १४ प्रागिक्कवालोप
रइंदुवारस्तथेत्थशालोऽपरईसराफः नक्तंततःस्याद्यमयामणाऊकंबूलतोगैरिकंबूलमुक्तम् १५ ख
ल्लासररद्दमथोदुफालिकुत्थंचदुत्थोत्थदिवीरनामा तंबीरकुत्थौदुरफश्चयोगाःस्युःषोडशोषांकथया-
मिलक्ष्म १६

पूर्वोक्तानांदीप्तांशानांप्रयोजनमाह पुरइति अनवमादिस्थानदृष्टौसत्यांग्रहोद्रष्टास्वदीप्तांशैःकृत्वापुरोऽग्रे पृष्ठेपश्चाद्वाऽवस्थितेग्रहेविशिष्टमुत्कृष्टंनवमादिस्थानस्थंदृक्फलंदृष्टिफलंदद्यात् तेषांदीप्तांशानामतिक्रमेदृष्टिफलंमध्यमं साधारणं दद्यादितिविदुः १४ अथषोडशयोगाव्याख्यायंते तन्नतेषांनामानिश्लोकद्वयेनाह प्रागिति खल्लेतिच प्राक्प्रथमोयोगः इक्कवालः १ अप-

रः इंदुवारः २ तथेत्थशालः ३ अपरः ईसराफः ४ ततोनक्तंस्यात् ५ यमया ६ मणऊ ७ कबूलं ८ गैरिकंबूलं ९ खल्लासरं १० रद्दं ११ अथोदुफालि
कुत्थ १२ दुत्थोत्थदिवीरं १३ तंबीरः १४ कुत्थः १५ दुरफः १६ एतेषोडशयोगाःस्युः एषामिक्कवालादीनांलक्ष्मलक्षणंकथयामि १५ १६ अथे
क्कवालेंदुवारयोर्द्वयोर्लक्षणमाह चेदिति लग्नचतुर्थसप्तमदशमस्थानानांकंटकसंज्ञाउक्ता कथिता कंटकचतुष्टयंकेंद्रइतिपर्यायाः तदनं
तरं द्वितीयपंचमाष्टमैकादशानांस्थानानांपणफरसंज्ञाउक्ताकथिता तदनंतरं तृतीयषष्ठनवमद्वादशस्थानानामापोक्लिमसंज्ञाउक्ताचेत्स

चेत्कंटकेपणफरेचखगाःसमस्ताःस्यादिक्कवालइतिराज्यसुखाप्तिहेतुः आपोक्लिमेयदिखगाःसकलेंदुवारोनस्याच्छु
भःक्वचनताजिकशास्त्रगीतः १७ शीघ्रोऽल्पभागोथेनभागमंदस्ततोनिजंतेजउपाददीत स्यादित्थशालोऽयमयोवि-
लिप्तालिप्तार्द्धहीनोयदिपूर्णमेतत् १८

मस्ताः सर्वे ग्रहाः केंद्रपणफरेचस्युः तदासइक्कवालाख्योयोगःस्यात्सइक्कवालयो
गोराज्यसुखयोराप्तिर्लब्धिस्तस्याःहेतुः अत्यंतशुभफलदइत्यर्थः आपोक्लिमेयदिसर्वेखगाःग्रहाःस्युस्तदेंदुवारनामकस्ताजिकशा
स्त्रेगीतःकथितोयोगःस्यात् किलइति निश्चयेनसयोगःक्वचनकुत्रापिवर्षमासप्रवेशादौशुभोनस्यात् १७ अथमुथशिलयोगस्यलक्षण
माह शीघ्रइति ययोर्द्वयोर्ग्रहयोर्मुथशिलविचारः क्रियतेतयोर्मध्येयस्याधिकागतिः सशीघ्रगतिर्ग्रहः द्वितीयःमंदगतिर्ग्रहःशीघ्रःशीघ्रगति

ग्रहः अल्पभागैः स्वल्पांशैरुपलक्षितोभवति घना बहवः भागाः अंशाः यस्यासौघनभागः तादृशेबह्वंशेमंदेमंदगतिग्रहे अग्रेसति एतदुक्तंभ प्र·१
वति शीघ्रगतिग्रहस्यभागापेक्षयामंदगतिग्रहस्याधिकभागाभवंति तदाशीघ्रगतिर्ग्रहः निजंस्वीयंतेजःसामर्थ्यंमंदगतिग्रहायउपाददीत ददा
ति तर्ह्ययंइत्थशालाख्योयोगःस्यात् अस्यैवनामांतरंमुथशिलमिति शीघ्रगतिग्रहात् शीघ्रग्रहदीप्तांशांतर्गततांतरभागैरधिकेमंदेमुथशि
लयोगवृत्तिपर्यवसितोऽर्थः अथपूर्णमुथशिलयोगमाह यदिशीघ्रगतिर्ग्रहः मंदगतिग्रहात् विलिप्ताएकविकलामात्रन्यूनोऽथवालिप्तार्द्धहीं-

शीघ्रोयदाभात्यलवःस्थितःसन्मंदेऽन्यभस्थोनिदधातितेजः स्यादित्थशालोऽयमथैषशी
घ्रदीप्तांशकांशैरिहमंदपृष्ठे १९ तदाभविष्यत्कथनीयमित्थशालंत्रिधैवंमुत्थशीलमाहुः

नः त्रिंशद्विकलान्यूनोपिभवेत्तदा एतन्मुथशिलंपूर्णंविंशतिविंशोपकात्मकंजातंस्यात् यदाद्वयोर्विकलांतावयवेनतुल्यताभवति तदापू-
र्णंमुथशिलमित्यर्थतःसिद्धम् १८ अथअदृष्टोमुथशिललक्षणमाह शीघ्रइति तदेतिपद्यार्द्धेनच यदाशीघ्रः शीघ्रगतिर्ग्रहः भात्यलवस्थि
तःराशेरंतिमांशेत्रिंशत्तमेंशेस्थितःसन् मंदेमंदगतिग्रहेऽन्यभस्थेअग्रिमराशौसतिशीघ्रग्रहस्यदीप्तांशावधितदाशीघ्रगतिर्ग्रहः मंदगतिग्रह २७
यतेजोनिदधाति अयमित्थशालयोगःस्यात् अथभविष्यमुथशिलयोगउच्यते अथेति एषशीघ्रगतिर्ग्रहःस्वदीप्तांशेभ्योऽधिकांशैः कृत्वामंदग

तिग्रहात् पृष्ठेस्थितः सन् मंदगतिग्रहे यदा निजं तेजः दातुकामो भवति तदा इत्थशालं मुथशिलयोगो भविष्यत् अग्रे भविष्यतीति गणनीयं ज्ञे
यम् एवं त्रिधा त्रिप्रकारकं मुथशिलमाहुः अथ मुथशिलयोगानां फलमाह लग्नेशेति लग्नेशः लग्नस्वामी यद्भावस्य प्रश्नः क्रियते तद्भावस्वामी
कार्याधिपः अनयोर्यथा मुथशिलयोगः तथा सतः अतिशिष्टाः कार्यमुशंति तद्यथा केनचिदागत्य प्रश्नः कृतः मम पुत्र स्त्री राज्य लाभादि-
सुखं भविष्यति नवेति तत्र लग्नस्वामी प्रश्नकर्त्ता ज्ञेयः तत्तद्भावाधीशश्च कार्यस्वामी तत्र पुत्रप्राप्तिचिंता पंचमभावात् स्त्रीप्राप्तिचिंता सप्तमभा

लग्नेशकार्याधिपयोर्यथैष योगस्तथा कार्यमुशंति संतः २० लग्नेशकार्याधिपतत्सहाया
यत्र स्युरस्मिन् पतिसौम्यदृष्टे तदा बलाढ्यं कथयंति योगं विशेषतः स्नेहदृशाऽपि संतः २१

वात् राज्यप्राप्तिचिंता दशमभावात् लाभचिंता एकादशभावात् एवं सर्वत्र ज्ञेयम् तत्र लग्नेशस्य राज्याद्यभीष्टकार्यभावेशस्य च मुथशिलयो
गो यथा भवति तथा तद्भावप्राप्तिर्वक्तव्या तयोर्वर्तमानो मुथशिलयोगश्चेत्तदा तद्भावसंबंधि सुखं इदानीं वर्तत इति वाच्यम् यदि तयोः पूर्णमुथ
शिलयोगस्तदा संपूर्णं तद्भावसंबंधि सुखं वाच्यम् यदि तयोः भविष्यन् मुथशिलयोगः तदा तद्भावसौख्यं अग्रे भविष्यतीति वाच्यम् १९ २० अथ
दृष्टिविचारमाह लग्नेशेति लग्नेशः लग्नस्वामी कार्याधिपः कार्यस्वामी च तत्सहायाः नाम लग्नेशमित्रं कार्येशमित्रं च एते चत्वारो यत्र यस्मिन् राशौ स्युः भवं

ति अस्मिन् राशौपतिः स्वामी सौम्यः शुभग्रहः आभ्यांदृष्टेसति तदामागुत्पन्नमुथशिलयोगंबलाढ्यम् उत्कृष्टफलदंकथयंतितत्रापिसंतः अ 
तिशिष्टाः स्नेहदृशास्नेहदृष्ट्याविशेषतः सबलमितिआहुः २१ अथाऽन्यमपिफलविचारमाह स्वर्क्षेति लग्नाधिपः कार्याधीशश्च स्वर्क्षादिषुस्वगृ
हस्वोच्चस्वहद्दास्वद्रेष्काणस्वनवांशादिषु अथवासत्स्थानेषुशुभग्रहस्थानेषुगतोविद्यमानः सन्स्तुभैः शुभग्रहैः युतेक्षितश्चेदभूत् तदाप्राक्

स्वर्क्षादिसत्स्थानगतः शुभैश्चेद्युतेक्षितोभूद्भविताऽथवास्ते तदा
शुभप्रागभवत्सुपूर्णमग्रेभविष्यत्यथवर्ततेत्त्व २२

पूर्वंसुभंसुभफलंसुपूर्णमभवज्जातमितिव
क्तव्यम् यदालग्नपकार्याधीशौ स्वर्क्षादिसत्स्थानगौ शुभैर्युतेक्षितौचेद्भवितारौतदासुभफलमग्रेभविष्यतीतिवाच्यम् यदालग्नपकार्या 
धीशौस्वर्क्षादिसत्स्थानगौशुभग्रहैर्युतेक्षितौचेद्भवतः तदाशुभफलमिदानींवर्त्तत एवेतिवक्तव्यम् २२ ७ ७

अथशुभफलमाह व्यत्यस्तमिति अस्मात्स्वर्क्षादिसत्स्थानगतइति पूर्वोक्ताद्यदि विपरीतभावेदुष्टस्थानेसतिव्यत्यस्तं अन्यथाज्ञेयम् तद्यथा स
लग्नाधीशः कार्याधीशोवास्वशत्रुक्षेत्रगतः स्वनीचगृहगतोवा स्वशत्रुषड्द्वादिष्वशुभेषु पापग्रहस्थानेषुवागतः सन् पापग्रहैर्युतो दृष्टोवा चेद्भूत्त
दाप्राक्पूर्वमेवाऽशुभमभवत् यदालग्नाधीशः कार्याधीशोवादुष्टस्थानगतः सन् पापग्रहैर्युतोक्षितोवाचेदास्तेतदेदानीं अनिष्टं वर्ततएवेति-
वाच्यम् अथतृतीयमुथशिलयोगफलविशेषविचारमाह अथेति यदालग्नेशः कार्येशोवाइष्टर्क्षगतः मित्रराशेः सकाशादनिष्टगृहंशत्रुगृहं

व्यत्यस्तमस्माद्विपरीतभावेऽथेष्टर्क्षितोऽनिष्टगृहंप्रपन्नः अभूच्छुभंप्रागशुभंत्विदानींसंयातुकामेनचभाविवाच्यम् २३
शीघ्रोयदामंदगतेरथैकमध्यंशमभ्येतितदेसराफः कार्यक्षयोमूसरिफेखलोत्थेसौम्येनहिल्लाजमतेनचिंत्यम् २४




प्रपन्नःप्राप्तः तदाप्राक् पूर्वंशुभंशुभफलं अभूज्जातमितिवक्तव्यम् इदानीमशुभफलंवर्त्ततइतिवाच्यम् संयातुकामेन तद्यथा
लग्नाधीशः कार्याधीशोवा मित्रगृहेवर्तते अग्रेशत्रुगृहंप्रति आयास्यति तदा अशुभफलंभाविवाच्यमग्रेभाविष्यति इतिवाच्य
म् २३ अथेसराफयोगस्यलक्षणमाह शीघ्रइति यदामंदगतेः मंदगतिग्रहस्यैकमध्यंशंशीघ्रः शीघ्रगतिर्ग्रहोभ्येति अतिक्रम्य अग्रेगच्छति
तदाइसराफः इसराफाख्योयोगःस्यात् अपरः पर्यायोमूसरीफाख्यइति खलोत्थेशीघ्रगति मंदगतिग्रहयोःपापयोःसंबंधेनजातेमूसरीफेयोगेसतिका

यदिक्षयोवांछितकार्यनाशःस्यात् तस्मिन्नीसराफयोगेसौम्येशुभग्रहेत्वन्नेकार्यक्षयोननास्ति इदंफलंहिल्लाजमतेनचिंत्यंज्ञेयम् २४ अथनक्तयोग
स्यलक्षणमाह लग्नेशेति लग्नेशः लग्नस्वामी कार्याधिपः कार्यस्वामी अनयोर्मिथः परस्परंदृष्टिर्नास्तिचेत् अथतन्मध्यगतोपिशीघ्रः यदितयोर्लग्नाधीश-
कार्याधीशयोर्मध्येयः कश्चिच्छीघ्रग्रहोभवति तादृशोमध्यवर्तीपृष्ठसंस्थाच्छीघ्रग्रहात् तेजः आदायगृहीत्वाऽन्यत्रान्यस्मिन्मंदगतिग्रहेन्यसेत् अर्पय

लग्नेशकार्याधिपयोर्नदृष्टिर्मिथोऽथतन्मध्यगतोपिशीघ्रः आदायतेजोयदिपृष्ठसंस्थान्न्यसेद्यथान्यत्रहिनक्तमेतत् २५
स्त्रीलाभपृच्छातनुरस्तिकन्यास्वामीबुधःसिंहगतोदशांशेः सूर्यांशकैर्देवगुरुःकलत्रेदृष्टिस्तयोर्नास्तिमिथोथचंद्रः २६
चापेवृषेन्त्योभयदृश्यमूर्तिःशीघ्रोऽष्टभागैरथवाभवांशैः आदायतेजोबुधतोददौयज्जीवायलाभःपरतःस्त्रियाःस्यात् २७




ति तन्नक्तंनक्तनामयोगःस्यात् २५ अथाऽस्यनक्तयोगस्योदाहरणमाह स्त्रीलाभेतिचापइतिच केनचित्प्रष्ट्रायस्मिन्समये आग
त्यपृच्छाप्रश्नःकृतःममस्त्रीप्राप्तिर्भविष्यति नवेति तस्मिन्समयेतनुर्लग्नंकन्यास्तितस्यस्वामीबुधःसिंहगतःसिंहराशौद्वादशस्थानेद
शांशैर्दशभिरंशैःपरिमितोदृष्टःतथादेवगुरुःबृहस्पतिःसूर्यांशकैर्द्वादशभिरंशैरुपलक्षितःसन् कलत्रेसप्तमस्थानेस्तितयोर्बुधजीव
योर्मिथःपरस्परंषडष्टस्थानस्थितत्वाद्दृष्टिर्नास्त्येव अथचंद्रःशीघ्रःशीघ्रगतिर्ग्रहःउभयोर्बुधजीवयोर्मध्यगतःसन् चापेधनुषि

अथवावृषभराशौअस्ति कीदृशःउभयदृश्यमूर्तिः उभाभ्यांबुधजीवाभ्यांदृश्यामूर्तिःस्वरूपंयस्यबुधजीवदृष्टः पुनःकीदृशःअष्टभागैरथवाभवां
शैःएकादशभिरंशैरुपलक्षितः एतादृशश्चंद्रः बुधतःतेजःसामर्थ्यंआदायगृहीत्वाजीवायगुरवेयद्ददातिस्म तस्माल्लग्नस्वामिनोबुधस्यतेजोप
हारात्स्वप्रयत्नेनस्त्रीप्राप्तिर्नभवतीतिवक्तव्यम् कुतःतृतीयेनमध्यस्थचंद्रेणतेजोपहारात्तस्मात्तृतीयमध्यस्थप्रयत्नेनस्त्रियाःप्राप्तिर्वक्तव्या
नक्तयोगोयम् २६ २७ अथयमयायोगलक्षणमाह अंतःस्थितइति द्वौलग्नाधीशकार्याधीशौपरस्परंनपश्यतःअनयोर्लग्नाधीशकार्या

अंतःस्थितोमंदगतिस्तुपश्येद्दीप्तांशकेद्वावथशीघ्रतस्तु
नीत्वामहोयच्छतिमंदगायकार्यस्यसिद्ध्यैयमयःप्रदिष्टः २८

धीशयोरंतःस्थितोमध्येवर्त्तमानोमंदगतिर्ग्रहः स्वदीप्तांशैः कृत्वाद्वौलग्नाधीशकार्याधीशौस्थानदृष्ट्यापश्येत् अथसमंदगामीग्रहः शीघ्रतः
लग्नाधीशकार्याधीशयोर्मध्येयः शीघ्रगतिर्ग्रहः तस्मान्महस्तेजोनीत्वागृहीत्वामंदगायमंदगतिग्रहाययच्छति लग्नपकार्यपयोर्मध्येयो
मंदगतिर्ग्रहः तस्मैयच्छतिददातिसयमयाख्योयोगः वांछितकार्यस्यसिद्ध्यैप्रदिष्टः कथितः २८ छ छ छ

अथास्ययमयायोगस्योदाहरणम् राज्येति दिगंशकइतिच ममराज्यप्राप्तिर्भविष्यतिनवेतिपृच्छायांप्रश्नेलग्नंतुलातस्यनाथः स्वामीसितःशु क्रः मेषेसप्तमस्थानेगतोऽष्टलवैरुपलक्षितोऽस्ति तथाराज्यनाथःराज्यभवनंदशमंतस्यनाथःस्वामीचंद्रः रसांशैःषडंशैरुपलक्षितःसन् वृष स्थोऽष्टमस्थानगतोभवति तयोर्लग्नाधीशराज्यनाथयोःपरस्परंद्विर्द्वादशस्थानस्थितत्वात् दृष्टिर्नास्त्येव गुरुः बृहस्पतिर्मंदो मंदगतिर्ग्रहः दिगं

राज्याप्तिपृच्छातुललग्ननाथोमेषेसितस्त्वष्टलवैर्वृषस्थः चंद्रोरसांशैर्यदिरा ज्यनाथोदृष्टिस्तयोर्नास्तिगुरुस्तुमंदः २९ दिगंशकःकर्कगतस्तुपश्यन्नुभौमहा दीप्तलवैःसचांद्रं ददौसितायेतिपदस्यलाभोऽमात्येनभावीतिविमृश्यवाच्यम् ३०

शकोदशभिरंशैःपरिमितःकर्कगतःकर्कस्थितोदशमस्थानस्थितःसन् उभौलग्नाधीशकार्याधीशौस्थानदृष्ट्यापश्यन् सन् उभा भ्यांचंद्रशुक्राभ्यांअधिकैःस्वदीप्तांशैःकृत्वासचांद्रंचंद्रसंबंधिमहःतेजोगृहीत्वासितायशुक्रायददौददाति अतःकारणात् पद स्यस्थानस्यराज्यलाभोऽमात्येनमंत्रिणाप्राविभविष्यति इतिविमृश्यविचार्यवाच्यंवक्तव्यम् यमयायोगोऽयम् २९ ३०

यमयायोगोऽयम्

८ ६ ९ ७ ५ १० ४ १० बृ शु ८ ११ १ ३ १२ चं २ ६

अथमणऊयोगलक्षणमाह वक्रइति तेजोहरेदितिच अस्मिन्मणऊयोगेलग्नाधीशकार्याधीशयोः परस्परंस्थानदृष्टिरपेक्षिता यदिशीघ्रखेटात् लग्नाधीशकार्याधीशयोर्मध्येयः शीघ्रखेटः शीघ्रगतिग्रहोंशादिस्तस्मात्पश्चात्पूर्वपुरः अग्रेवांशैरेववक्रोभौमः शनिर्वातिष्ठति तादृशोभौमः शनिर्वातुर्यदृष्ट्याचतुर्थस्थानदृष्ट्यावेकर्क्षसमर्क्षभुवावा अथवा एकराशिजातयादृष्ट्या तथासप्तमस्थानजातयादशादृष्ट्यावान्येदंशैरधिकोनकैः तद्यथा शीघ्रग्रहस्यभागापेक्षयाऽधिकैरूनकैर्वांशैः शीघ्रगतिग्रहस्यदीप्तांशमध्यवर्तिभिः पश्यन्सन् शीघ्रगतिग्रहस्यतेजोहरेत् कीदृशः

वक्रःशनिर्वायदिशीघ्रखेटात्पश्चात्पुरस्तिष्ठतितुर्यदृष्ट्या एकर्क्षसप्तर्क्षभुवादृशावापश्यन्नथांशैरधिकोनकैश्चेत् ३१ तेजो
हरेत्कार्यपदेत्थशालीस्थितोऽपिवासौमणऊसमानः स्त्रीलाभपृच्छातनुरस्तिकन्याऽत्रज्ञोदिगंशोऽस्तितिथिभिःसुरेज्यः ३२

कार्यपदेत्थशालीस्थितः कार्यपदंवाञ्छितकार्यस्यस्थानं अर्थात्कार्यस्थानाधीशेनसहमुथशिलकारीसंस्थितोऽपिवर्त्तमानश्चेद्भवतितदा असौ-मणऊनामयोगःस्यात् सग्रुभोनकार्यकर्तानभवेदित्यर्थः अथोदाहरणम् स्त्रीलाभेति कलत्रगइतिच ममस्त्रीप्राप्तिर्भविष्यति नवेतिपृच्छायां प्रश्नेतनुर्लग्नंकन्यास्ति तस्यस्वामीज्ञोबुधः अत्रकन्यायांदिगंशैर्दशभिरंशैरुपलक्षितोऽस्ति तथासुरेज्योगुरुः तिथिभिः पंचदशभागैरुपलक्षितः सनकलत्रगः कलत्रंस्त्रीभवनंतत्रगच्छतीति सप्तमस्थानेःस्त्रीत्यर्थः तथाअवनिजोभौमःस्वेदशमस्थानेभवांशैरेकादशभिरंशैरुपलक्षितो

स्ति अथभौमस्तुयदिस्याबुधंपश्यति तस्माद्बुधात् एकांशेनाधिकोभूत्वाऽग्रस्थितोजातस्ततोग्रेगत्वा भौमेनहृतंस्वतेजोयस्यतादृशः तेजोरहि-
तोबुधः पूर्वंप्रथमतःकृतः पश्चादनंतरंजीवेनकार्याधीशेनसह शीघ्रगतित्वान्मिलति इतिहेतोः नार्याःजायायाःलाभःप्राप्तिर्नोनास्तीति वक्तव्यम्
अयमेकोयोगः अथापरः अथवा यथावस्थितेपूर्वस्मिन्योगेबुधापेक्षयाभौमः स्वल्पांशेरवस्थितःसन् पृष्ठगतोभवति एवमस्मिन् भौमेपृष्ठगते-
सति असौमणऊयोगः कार्यनाशकोभवति मणऊयोगोऽयम् ३१ ३२ ३३ अथमणऊयोगभेदमाह यदीत्यशालइति यदिउभयोर्-

कलत्रगःस्वेऽवनिजोभवांशैःपूर्वंबुधोभौमहृत स्वतेजाः जीवेनपश्चान्मिलतीतिलाभोनार्यास्तुनोपृष्ठगतेऽथवास्मिन् ३३
यदीत्थशालोस्त्युभयोःस्वदीसहीनाधिकांशैःशनिभूसुतौचेत् एकर्क्षगौलग्नपकार्यपौस्तस्तेजोहरौकार्यहरौनिरुक्तौ ३४

र्लग्नेशकार्येशयोः इत्थशालोमुथशिलयोगोभवति चेच्छनिभूसुतौएकर्क्षगौलग्नाधीशकार्याधीशयोर्मध्येकेनचित्सह एकराशिगतौस्तः स्व-
दीसहीनाधिकांशैः स्वशब्देनलग्नाधीशकार्याधीशौतयोर्यदीप्तांशकास्तदपेक्षयान्यूनैरधिकैर्वादीप्तांशमध्यवर्तिभिः शनिभौमयोरंशैः कृ-
त्वालग्नपकार्यपयोः लग्नाधीशकार्याधीशयोस्तेजोहरौसंतौकार्यहरौकार्यनाशकौनिरुक्तौ ३४ ७ ७ ७

| मणऊयोगोऽयम् | मणऊयोगः |
| --- | --- |
| ७ ६ ५ / ८ बु १० ४ / ३ / ९ मं ११ / १२ / १० शु १५ २ / ११ १ | ७ ६ ५ / ८ बु १० ४ / ३ / ९ मं ११ / १२ / १० शु १५ २ / ११ १ |

अथोदाहरणम् राज्याप्तिपृच्छेति ममराज्यप्राप्तिर्भविष्यति नवेतिपृच्छायां प्रश्नेतुलालग्नंतस्यनाथः स्वामीसितः शुक्रःकर्केतिथिभिः पंचदशांशैः उपलक्षितोऽस्ति राज्यभवनाधीशः शशीचंद्रः वृषेदिगंशैर्दशभिरंशैरुपलक्षितोऽस्ति कुजोवृषस्थः सन् भूपलवैः षोडशांशैरुपलक्षितोऽस्ति चकाराच्छनिरपिवृषस्थःसन् भूपलवैः १६ उपलक्षितोऽस्तीतिज्ञातव्यम् भौमोद्वयोर्लग्नाधीशकार्याधीशयोरित्थशालेपर-

राज्याप्तिपृच्छातुललग्ननाथः कर्केसितोंऽशोस्तिथिभिर्दिगंशैः वृषेशशीभूपलवैःकुजश्च
हरन्द्वयोर्भांहरतेचराज्यम् ३५ लग्नकार्येशयोरित्थशालत्रेहित्थशालतः कंबूलंश्रेष्ठ
मध्यादिभेदैर्नानाविधंस्मृतम् ३६

स्परमुथशिलयोगेसतिभौतेजोहरन् राज्यंहरति पुनर्मणऊयोगोऽयम् ३५ अथानेकप्रकारभिन्नंकंबूलयोगमाह तत्रादौकंबूलयोगस्यलक्षणमाह लग्नकार्येशयोरित्थेति अत्रलग्नाधीशकार्याधीशयोरित्थशालेपरस्परमुथशिलयोगेसति अनयोर्मध्येकेनचिदेकेनसाकंइंदुश्चंद्रः इत्थशालतः मुथशिलंचेत्करोति तदाकंबूलंकंबूलनामायोगःस्यात् लग्नेशकार्येशयोर्मध्येकेनचिदेकेनसहचंद्रमुथशिलेकंबूलंभवतीत्युक्तम् ताजिकभूषणेयथा निशामक

पुनर्मणुऊयोगः

८ ६ ७ ९ ५ १० ४ शु.१५ ११ १ ३ १२ २ चं १० मं १६ श १६

रोयोगकरग्रहाभ्यामेकेनचेन्मुथशिलंकरोति कंबूलयोगः कथितस्तदानीं पूर्णोहिमध्योऽधमकस्त्रिधाःसो समम-ध्यमयोर्मध्यमत्वेन गणनात्त्रिधाइत्युक्तम् अन्यच्च द्वयोर्मुथशिलविधुः केनचित्स्यात्तयोर्मुथशिलः सकंबूलयोग इति तत्कंबूलसामान्यतस्त्रिविधम् श्रेष्ठमध्यादि श्रेष्ठम् मध्यमम् आदिशब्देनाधमम् एतैर्भेदैर्नानाविधंस्मृतम् ल-ग्नेशकार्येशचंद्राणांचतुर्विधादिकारभेदेनषोडशप्रकारकमित्यर्थः तद्यथा उत्तमोत्तमम् १ उत्तममध्यमम् २ उत्तमम् ३ उत्तमाधमम् ४ मध्यमोत्तमम् ५ मध्यममध्यमम् ६ मध्यमम् ७ मध्यमाधमम् ८ उत्तमम् ९ मध्यमम् १० मध्यममध्य-मम् ११ अधमम् १२ अधमोत्तमम् १३ अधममध्यमम् १४ अधमम् १५ अधमाधमम् १६ एतेषांप्रकटार्थंचक्रंलिख्यते तत्रस्वगृहेस्वोच्चाधिकारश्चोत्तमः स्वहद्दास्वद्रेष्काण स्वनवांशाधिकारोमध्यमः स्वशत्रुस्वनीचाधिकारोऽधमः एतत् स्थानत्रितयराहित्यंसमाधिकारः उक्तंचमनुष्यजातके कंबूलमी षट्टितयेत्यशालेचंद्रोऽपिचेन्मुथशिलंविधत्ते मिथःस्वगेहोच्चग तौप्रधानंमध्यंत्रिकाद्येत्वधमंपरर्क्षे समरसिंहप्युक्तमस्ति ३६

| | लग्नाधीशकार्यो० | लग्नाधीशकार्यो० | लग्नाधिकारस्थौ | लग्नाधिकारस्थौ |
|---|---|---|---|---|
| उत्तमाधिकारस्थ्चंद्रः | उत्तमाधिकारस्थौ | मध्यमाधिकारस्थौ | समाधिकारस्थौ | अधमाधिकारस्थौ |
| मध्यमाधिकारस्थ्चंद्रः | उत्तमाधिकारस्थौ | मध्यमाधिकारस्थौ | समाधिकारस्थौ | अधमाधिकारस्थौ |
| समाधिकारस्थ्चंद्रः | उत्तमाधिकारस्थौ | मध्यमाधिकारस्थौ | समाधिकारस्थौ | अधमाधिकारस्थौ |
| | उत्तमाधिकारस्थौ | मध्यमाधिकारस्थौ | समाधिकारस्थौ | अधमाधिकारस्थौ |

उत्तमोत्तमाभिः संज्ञाभिस्तानेवभेदानाह तत्रादौउत्तमोत्तमकंबूललक्षणमाह यदींदुरिति यदिइंदुश्चंद्रः गृहोच्चस्थः स्वगृहेस्वोच्चेवाभवति तादृशो
लग्नकार्यपौ तादृशेनस्वगृहस्वोच्चस्थितेनवालग्नाधीशेन तथास्वगृहस्थेनोच्चस्थितेनवाकार्याधीशेनपरस्परकृतमुथशिलेन सहइत्थशालीमु
थशिलंकरोति तदातत्कंबूलउत्तमोत्तममुच्यते त्रयाणांउत्तमाधिकारप्राप्तत्वात् अयंप्रथमोभेदः अत्रषोडशकंबूलयोगेषुलग्नेशकार्येश-
योरेकाधिकारत्वंपरस्परमुथशिलंचनियतम् चंद्रमुथशिलंतुलग्नेशकार्येशयोर्मध्येकेनचिदेकेनसहापेक्षितम् ३७ अथोत्तममध्यमकंबू-

यदींदुःस्वगृहोच्चस्थस्तादृशौलग्नकार्यपौ इत्थशालीकंबूलंतदुत्तमोत्तममुच्यते ३७ स्वीय
हद्दाद्रेष्काणांकभागस्थेनेत्थशालतः मध्यमोत्तमकंबूलंहीनाधिकृतिनोत्तमम् ३८

लोत्तमयोः कंबूलयो
र्लक्षणमाह स्वीयेति अथस्वीयहद्दाद्रेष्काणांकभागस्थेनस्वहद्दायांस्वद्रेष्काणेवास्वनवांशेवालग्नाधीशेनकार्याधीशेनचपरस्परंकृतमुथशि-
लेनचस्वगृहगः स्वोच्चराशिगतोवाचंद्रश्चेन्मुथशिलंकरोति तदोत्तममध्यमंकंबूलंस्यात् कुतः चंद्रस्योत्तमाधिकारप्राप्तत्वात् इतरयोर्म
ध्यमाधिकारप्राप्तत्वात् ग्रंथकर्त्रातुमध्यमोत्तममित्युक्तम् कुतः छंदोभंगभयात् अत्रोदाहरणम् ममभाग्यंभविष्यतिनवेति प्रश्नेतुला
लग्नंतस्यस्वामीभृगुर्दशमेस्वहद्दायांदशांशे १० भाग्य भवनाधीशोबुधः सप्तमेस्वहद्दायांचतुर्दशांशेः १४ अनयोः परस्परंमुथशिलंचंद्रः क-

कें स्वगृहे चतुर्दशांशस्ताभ्यां मुथशिलीत्युत्तममध्यममेतत्कंबूलं भवति अयं द्वितीयभेदः एवं हीनाधिकृतिनाहीनाः गताः उत्तममध्यमाधमाधिका
राः यस्य तादृशेन लग्नाधीशेन कार्याधीशेन परस्परं मुथशिलेन स्वगृहस्थो उच्चस्थो वा शशी चेन्मुथशिलं करोति तदोत्तममेव कंबूलं भवति कुतः के
वलं चंद्रस्योत्तमाधिकारप्राप्तत्वात् इतरयोः समाधिकारप्राप्तत्वात् उदाहरणम् राज्यप्राप्तिप्रश्ने लग्नं मिथुनं तस्य स्वामी बुधः समस्य गृहे तिष्ठति
राज्यभवनाधीशो गुरुः समस्य गृहे कन्यायामस्ति चंद्रस्तूच्चे वृषे एवं त्रयाणां परस्परं मुथशिलयोगे सत्युत्तमकंबूलं जातं तेन राज्यप्राप्तिरुत्तमा

उत्तमाधमतानीचरिपुगेहस्थितेन चेत्

वक्तव्या अयं तृतीयभेदः ३८ अथ श्लोकार्द्धेनोत्तमाधमकंबूललक्षणमाह उत्तमेति स्वनीचराशिगतेन स्वशत्रुराशिगतेन वा लग्नाधीशेन कार्या
धीशेन च परस्परं मुथशिलयोगे सति स्वगृहगतः स्वोच्चराशिगतो वा चंद्रः तयोरन्यतरेण चेन्मुथशिलं करोति तदोत्तमाधमता उत्तमाधमाख्यं
कंबूलं स्यात् कुतः चंद्रस्योत्तमाधिकारप्राप्तत्वात् इतरयोरधमाधिकारप्राप्तत्वात् अत्रोदाहरणम् स्त्रीप्राप्तिप्रश्ने तुला लग्नं तत्स्वामी शुक्रः क ३३
न्यायां दशांशः १० नीचे स्त्रीभवनाधिशो भौमः कर्के नीचे पंचदशांशश्चंद्रोऽपि कर्के स्वगृहे द्वादशांशः १२ एषां परस्परं मुथशिलयोगः उत्तमाधम

कंबूलाख्योजातोऽतः स्त्रीप्राप्तिरीषदायाससाध्या अयंचतुर्थोभेदः अथमध्यमोत्तमकंबूललक्षणमाह स्वहद्दादीति अथचंद्रः स्वहद्दाया-
मित्युक्तम् तर्हि हद्दाचक्रमध्येचंद्रस्याधिकारोनास्ति भौमादिपंचकस्यैववर्त्तते अतःकारणात् आदिशब्देनस्वद्रेक्काणेस्वनवांशकेवास्थितः
सन् स्वभोच्चस्थेनस्वगृहगतेनस्वोच्चराशिगतेनवालग्नाधीशेनकार्याधीशेनचपरस्परकृतमुथशिलेनइत्थशालकृतमुथशिलंचेत् करोति तदै
तत् कंबूलमध्यमोत्तमाख्यंस्यात् कुतः चंद्रस्यमध्यमाधिकारप्राप्तत्वात् इतरयोरुत्तमाधिकारप्राप्तत्वात् एतन्मध्यमोत्तमंकंबूलंपूर्वस्मा

स्वहद्दादिगतश्चंद्रःस्वभोच्चस्थेत्थशालकृत् ३१ मध्यमोत्तममेतच्चपूर्वस्मान्नविशिष्यते

त् पूर्वोक्तात् उत्तममध्यमकंबूलान्नविशिष्यते नविशिष्टफलदमित्यर्थः अत्रोदाहरणम् स्त्रीप्राप्तिप्रश्नेतुलालग्नेतस्यस्वामीशुक्रः लग्ने
स्वगृहेचतुर्विंशत्यंशः २४ सप्तमभावोमेषः तत्स्वामीभौमः मेषेस्वगृहे अष्टाविंशत्यंशः २८ चंद्रस्तुवृषकर्कौविहायमकरेस्वनवमांशेद्वाविं
शत्यंशेः २२ तत्रैषांमुथशिलंपरस्परमभूदितिमध्यमोत्तमाख्यंकंबूलं अत्रस्त्रीप्राप्तिरुत्तमा अयंपंचमोभेदः अथश्लोकार्द्धेनमध्य-
माधमकंबूललक्षणमाह स्वहद्दादिपदस्थेनेति स्वहद्दायांस्वद्रेक्काणेवास्वनवांशेवास्थितेनलग्नाधीशेनकार्याधीशेनचपरस्परकृतमुथ

शिलेनस्वद्रेक्काणेस्वनवांशेवास्थितश्चंद्रोमुत्थशिलंचेत्करोति तदामध्यममध्यकंबूलंस्यात् कुतःसर्वेषांमध्यमाधिकारप्राप्तत्वात् अत्रोदाहरणम् संततिप्रश्नेमिथुनलग्नंतस्यस्वामीबुधस्तुलायांस्वहद्दायां अष्टांशः८ सुतभवनाधीशः शुक्रोमिथुनेस्वहद्दायामष्टमांशः ८ चंद्रस्तु कर्केप्रथमेद्रेक्काणेस्वीयनवांशेचस्वीयेऽस्ति अत्रत्रयाणामपिपरस्परंमुथशिलयोगाच्चमध्यममध्यमाख्यकंबूलंतेनसंततिप्राप्तिर्मध्यममध्यमाभवति प्रयत्नेनसाध्येत्यर्थः अयंषष्ठोभेदः ३९ ४० अथश्लोकार्द्धेनमध्यमकंबूललक्षणमाह मध्यममिति हीनाराहिता

स्वहद्दादिपदस्थेनकंबूलंमध्यमाधमम् ४० मध्यमंमकंबूलंस्याद्धीनाधिकृतिखेटजम्

आधिकृतयोऽधिकारायेषांतेहीनाधिकृतयस्तेचखेटाश्चतेभ्योजातंमुथशिलम् एतदुक्तंभवति स्वोत्तममध्यमाधिकाररहितेनअर्थात्समाधिकारप्राप्तेनलग्नाधीशेनकार्याधीशेनचकृतपरस्परमुथशिलेनस्वमध्यमाधिकारस्थः शशीचेत् मुथशिलंकरोति तदामध्यममकंबूलंस्यात् मकंबूलंकंबूलस्यपर्यायः कुतः चंद्रस्यमध्यमाधिकारप्राप्तत्वात् इतरयोः समाधिकारप्राप्तत्वात् अत्रोदाहरणम् ३४
संततिप्रश्नेवृषलग्नंतत्पतिःशुक्रः समस्यहद्दायान्तुरंशःसन् मकरेऽस्ति पंचमभवनाधीशोबुधःसमस्यहद्दायांपंचांशःसन् तुलाया

मस्तिचंद्रस्तुस्वद्रेष्काणेकर्केंध्यंशोस्ति परस्परमेतन्मुथशीलेकृतेमध्यमकंबूलंजातंतेनसंततिप्राप्तिरायाससाध्येत्यर्थः अयंसप्तमोभेदः अ
थश्लोकार्द्धेनमध्यमाधमकंबूललक्षणमाह मध्यमाधमेति लग्नाधीशेनकार्याधीशेनचस्वनीचक्षेत्रेस्वशत्रुक्षेत्रेवास्थितेनकृतपरस्परमुथशी-
लेनस्वद्रेष्काणेस्वनवांशेवास्थितश्चंद्रोमुथशिलंचेत्करोति तदामध्यमाधमाख्यंकंबूलंस्यात् कुतःचंद्रस्यमध्यमाधिकारप्राप्तत्वात् इतरयोर
धमाधिकारप्राप्तत्वात् अत्रोदाहरणं भाग्यप्राप्तिप्रश्नेमेषलग्नंतस्यस्वामीभौमः कर्केनीचेनवमभुवनस्वामीगुरुर्मकरेनीचेचंद्रः कर्केस्वद्रेष्का
णेएषांपरस्परमुथशिलयोगसत्वान्मध्यमाधमकंबूलंजातंभाग्यप्राप्तिरायाससाध्याभवति अयमष्टमोभेदः ४१ अथापरमुत्तमकंबूललक्षण

मध्यमाधमकंबूलंनीचारिभगखेटजम् ४१ इंदुःपदोनःस्वक्षोच्चस्थितेनाप्युत्तमंतुतत्

माह इंदुरिति इंदुश्चंद्रः पदोनःअधिकाररहितः स्वगृहस्वोच्चस्वद्रेष्काणस्वनवांशस्वनीचस्वशत्रुक्षेत्रत्याधिकाररहितः किंतु समगृहादिगतःस्वक्षो
च्चस्थितेनस्वराशिगतेनस्वोच्चराशिगतेनवालग्नाधीशेनकार्याधीशेनचपरस्परमुथशिलेनचेन्मुथशिलवान् भवति तदोत्तममेवकंबूलंस्यात् कुतः
चंद्रस्याधिकारशून्यत्वात् इतरयोरुत्तमाधिकारप्राप्तत्वात् अत्रोदाहरणम् धनलाभप्रश्नेतुलालग्नंलग्नाधीशःशुक्रःलग्नेस्वगृहेधनाधीशोभौमः
मकरेउच्चेचंद्रःसमद्रेष्काणेमिथुनेस्ति एषांपरस्परमुथशिलयोगसत्वात् कंबूलंसमोत्तमंजातमितिभाग्यप्राप्तिरुत्तमा अयंनवमोभेदः अथापरं

मध्यमकंबूललक्षणंश्लोकार्द्धेनाह स्वहद्दादिति स्वहद्दायांस्वद्रेक्काणेवासनवांशेवास्थितेनलग्नाधीशेनकार्याधीशेनचकृतपरस्परमुथशिलेनसमाधिकारस्थितश्चंद्रश्चेन्मुथशिलीतदाकंबूलंमध्यमंस्यात् कुतश्चंद्रस्याधिकारराहित्यादितरयोः मध्यमाधिकारप्राप्तत्वात् एतत्पूर्ववत्पूर्वोक्तमध्यमकंबूलतुल्यफलदम् उदाहरणम् धनलाभप्रश्नेतुलालग्नंतस्यस्वामीशुक्रः सिंहेस्वहद्दायांदशांशः १० धनभावाधीशोभौमः धनुषिस्वहद्दायांदशांशः १० चंद्रस्तुमध्यमद्रेक्काणेमिथुनेदशांशः १० तत्रैषांपरस्परंमुथशिलयोगोस्ति तस्मान्मध्यममेतत्कंबूलंभवति तेनधनलाभोमध्यमोभवति अयंदशमोभेदः ४२ पुनःप्रकारांतरेणमध्यमकंबूललक्षणमाह श्लोकार्द्धेन पादोनेनेति पादोनेनउत्तममध्यमाधि

स्वहद्दादिगतेनापिपूर्ववन्मध्यमुच्यते ४२ पादोनेनापिमध्यंस्यादितियुक्तंप्रतीयते

काररहितेनलग्नाधीशेनकार्याधीशेनचकृतपरस्परमुथशिलेनसमाधिकारस्थितश्चंद्रश्चेन्मुथशिलीतदामध्यमकंबूलंस्यादित्यस्याभिप्रायुक्तं युक्तिसहंप्रतीयते कुतःसर्वेषांसमाधिकारप्राप्तत्वात् उदाहरणम् धनलाभप्रश्नेलग्नंमेषः तत्स्वामीभौमः सिंहेदशांशः १०

धनेशःशुक्रः कुंभेदशांशः १० चंद्रस्तुलायांदशांशः १० एषांपरस्परमुथशिलयोगे जातमध्यमकंबूलंतेनलब्धिर्मध्यमानोत्कृष्टानापकृष्टेत्यर्थः 

अयमेकादशोभेदः अथाधमकंबूलंश्लोकार्द्धेनाह नीचारिस्थानेत्यशालेइति स्वनीचराशिगतेनस्वशत्रुराशिगतेनवालग्नाधीशेनकार्याधीशेनच-

कृतपरस्परमुथशिलेनसमाधिकारस्थितश्चंद्रश्चेन्मुथशिलंकरोति तदाधमाख्यंकंबूलंस्यात् कुतश्चंद्रस्यसमाधिकारत्वात् इतरयोरधमाधिकारप्राप्तत्वात् उदाहरणम् पुत्रप्रश्नेमिथुनलग्नंतस्यस्वामीबुधः मीनेनीचेपुत्रभावाधीशः शुक्रः कन्यायांनीचेचंद्रस्त्वधिकाररहितः अत्र त्रयाणांपरस्परंमुथशिलयोगादधमंकंबूलंस्यात् तेनपुत्राप्तिश्चिंता अधमाऽधमफला ईषत्कष्टसाध्येतियावत् अयंद्वादशोभेदः ४३ अथाधमोत्तमकंबूललक्षणमाह नीचशत्र्विति यदिचंद्रोनीचराशिगतः शत्रुराशिगतोवा स्वगृहगतेनस्वोच्चगतेनवालग्नाधीशेनकार्याधीशेनचपर

नीचारिस्थेनेत्थशालेऽधमंकंबूलमुच्यते ४३ नीचशत्रुभगश्चंद्रः
स्वभोच्चस्थेत्थशालकृत् अधमोत्तमकंबूलंपूर्वतुल्यफलप्रदम् ४४

स्परंकृतमुथशिलेनचेन्मुथशिलीभवति तदा अधमोत्तमकंबूलंस्यात् कुतःचंद्रस्याऽधमाधिकारत्वात् इतरयोरुत्तमाधिकारप्राप्तत्वात् एतत्पूर्वमुक्तस्यकंबूलयोगस्यतुल्यं फलंप्रददाति उदाहरणम् सुखप्राप्तिप्रश्नेलग्नंसिंहः तत्स्वामीसूर्यः मेषेउच्चेसुखभवनाधीशोभौमः मकरेउच्चेचंद्रो नीचेवृश्चिके एवंत्रयाणांपरस्परंमुथशीलेजातेसति अधमोत्तमसंज्ञकंकंबूलमभूदिति सुखप्राप्तिरीषदायाससाध्याभवति अयंत्रयोदशोभेदः ४४

अथाधममध्यमकंबूललक्षणमाह चंद्रइति यदिचंद्रोनीचगृहगतः शत्रुगृहगतोवास्वहद्दायामादिशब्देनस्वद्रेक्काणेवास्वनवांशेवालग्नाधीशेनकार्या
धीशेनचपरस्परंकृतमुथशिलेनचेदित्थशालीमुथशिलीभवति तदाऽधममध्यमकंबूलमुच्यते कुतः चंद्रस्याधमाधिकारत्वादितरयोर्मध्यमाधि
कारप्राप्तत्वात् उदाहरणम् पुत्रप्राप्तिप्रश्नेकन्यालग्नंतत्स्वामीबुधः मकरेस्वहद्दायांत्र्यंशः पुत्रभावाधीशः शनिस्तुमीनेस्वहद्दायांपंचां-
शोस्तिचंद्रस्तुनीचेवृश्चिकेत्र्यंशः एषांत्रयाणांपरस्परंमुथशिलयोगेजातेसति अधममध्यमकंबूलंजातं तेनसंततिप्राप्तिरत्यायाससाध्या

चंद्रोनीचारिगेहस्थःस्वहद्दादिगतोनचेत् इत्थशालीकंबूलंतदुच्यतेऽधममध्यमम् ४५ इंदुर्नीचारिगेहस्थःपादो
नेनेत्थशालकृत् कंबूलमध्यमंज्ञेयंपूर्वतुल्यफलप्रदम् ४६

ज्ञेया अयंचतुर्दशोभेदः ४५ अथान्यदधमकंबूललक्ष
णमाह इंदुरिति यदींदुश्चंद्रः स्वनीचराशिगतः स्वशत्रुराशिगतोवा पादोनेन उत्तममध्यमाधिकाररहितेनलग्नाधीशेनकार्याधीशेनचकृत
परस्परमुथशिलेनचेन्मुथशिलीभवति तदाऽधमाख्यंकंबूलंज्ञेयम् कुतःचंद्रस्याधमाधिकारप्राप्तत्वात् इतरयोःसमाधिकारप्राप्त
त्वात् एतत्पूर्वमुक्तस्यकंबूलयोगस्यतुल्यफलंप्रददाति उदाहरणम् राज्यप्राप्तिप्रश्नेवृषलग्नंतत्स्वामीशुक्रःषडंशः सिंहेराज्याधीशः श
निर्वृषेदशांशः १० चंद्रस्तुनीचेवृश्चिकेत्र्यंशोस्ति एषांमुथशिलयोगेजातेऽधमकंबूलंतेनराज्यप्राप्तिःकष्टसाध्या अयंपंचदशोभेदः ४६

अथाधमाधमकंबूललक्षणमाह नीचारिभस्थेति स्वनीचराशिगतेनस्वशत्रुराशिगतेनवालग्नाधीशेनकार्याधीशेनच परस्परंकृतमुथशिलेनस्वनीच राशिगतः स्वशत्रुराशिगतोवाशशीचेन्मुथशिलंकरोतितदाकंबूलमधमाधममुच्यते कुतः चंद्रस्येतयोश्चाधमाधिकारप्राप्तत्वात् उदाहरणम् पुत्रलाभप्रश्नेलग्नंधनुः तस्यस्वामीगुरुः मकरेनीचेपुत्रभावाधीशोभौमः कर्केनीचेचंद्रोपिमीनेवृश्चिके अत्रत्रयाणांपरस्परमुथशिलयोगेऽध माधमकंबूलाख्ययोगस्तेनसंततिलाभोनास्त्येवेतिवाच्यम् अयंषोडशोभेदः ४७ एवंषोडशकंबूलस्यभेदाउक्ताः अथप्रागुक्तानांकंबूलभेदाना

नीचारिभस्थखेटेननीचारिभगतःशशी इत्यशालीकंबूलंतदधमाधममुच्यते ४७ मेषेरविःकुजोवापिवृषे
कर्केऽथवाशशी तत्रेत्थशालीकंबूलमुत्तमोत्तमकार्यकृत् ४८

नामध्येउत्तमोत्तमकंबूलयोगोदाहरणमाह मेषइति अ त्रापत्यप्रश्नेमेषलग्नंतत्स्वामीभौमः मेषेस्वगृहेपंचमभावाधीशोरविर्मेषेस्वोच्चे अनयोर्लग्नाधीशकार्याधीशयोःपरस्परमुथशीलयोगेसति चं द्रस्यवृषउच्चंकर्कस्वगृहं अनयोर्मध्येकस्मिन्विद्यमानश्चंद्रश्चेन्मुथशीलंकरोति तदाकंबूलमुत्तमोत्तमकार्यकृत् वांछितफलदमित्यर्थः उदाहर णम् पुत्रलाभप्रश्नेमेषलग्नंतत्रलग्नाधीशोभौमः स्वगृहेकार्याधीशोरविः मेषेस्वोच्चेचंद्रोपिकर्केस्वगृहे अत्रउत्तमाधिकारेस्थितानांत्रयाणां परस्परंमुथशिलयोगः उत्तमोत्तमकंबूलाख्यः तेनपुत्रलाभोभविष्यतीतिवाच्यम् ४८ ॐ ॐ ॐ ॐ ॐ

अथांतिमकंबूलयोगस्याधमाधमाख्यस्योदाहरणमाह वृश्चिकस्थइति पुत्रलाभप्रश्नेधनुर्लग्नंलग्नाधीशोगुरुर्मकरेनीचेपुत्रभावाधीशो भौमः कर्केनीचेवृश्चिकस्थः चंद्रोनीचेतत्रचंद्रभौमाख्यंगुरुभौमाभ्यांचमुथशिलयोगाज्जातंकंबूलमधमाधमाख्यंतद्वांछितकार्यविध्वंसं दुःखंचददाति उदाहरणम् पुत्रलाभप्रश्नेधनुर्लग्नंतत्रलग्नाधीशोगुरुर्मकरेनीचेकार्याधीशोभौमः कर्केनीचेचंद्रोनीचेवृश्चिके अत्राधमाधि-

वृश्चिकस्थःशशीभौमःकर्केतत्रेत्थशालतः अधमाधमकंबूलंकार्यविध्वंसदुःखदम् ४९
एवंपूर्वोक्तभेदानामुदाहरणयोजना उक्तलक्षणसंबंधादूहनीयाविचक्षणैः ५०

कारस्थितानांत्रयाणांपरस्परमुथशिलयोगोऽधमाधमकंबूलाख्यस्तेनपुत्रलाभोनास्त्येवेतिवाच्यम् ४९ अथाद्यंतिमयोःकंबूलभेदयोर्दिशाअंतरालवर्तिनांकंबूलभेदानामुदाहरणान्यूह्यानीत्याह एवमेवपूर्वोक्तभेदानांविचक्षणैर्दैवज्ञैरुदाहरणयोजनाउक्तलक्षणसंबंधात्पागुक्तलक्षणयोजनाऊहनीयाविचार्याउदाहरणानिनोक्तानि कुतःलक्षणवाक्यानांस्पष्टार्थत्वात् ५० ७२ ७२

अथात्रकेचित्कंबूललक्षणेशीघ्रमंदगतिग्रहयोरेकराशिस्थयोरेवमुथशिलयोगमाहुः तन्मतमुपन्यस्यति मेषराशिस्थे ऽज्ञेचंद्रमसिमेष स्थेनैवशनिनासहमुथशिलयोगेकृतेसति तदाएतदुत्पन्नंकंबूलंमध्यमाधमसंज्ञंजातंइत्यादिदृष्टांतवशात्शीघ्रमंदगतिग्रहयोरेकराश्यव स्थितत्वात् एवंमुथशिलयोगादीनपरेजगुः आदिशब्देनेसराफादयः तथाचसमरसिंहः मेषस्थेज्ञोशनिनाकर्कस्थेभूभुवास्त्रियांकविना मकरस्थेगुरुणासहमीनस्थेज्ञेनतुशुभंच १ अस्यार्थः मेषराशिस्थेज्ञेचंद्रमसिस्थानांतरस्यानुक्तत्वान्मेषस्थेनैवशनिनासहकृतमुथशि लेसतिमध्यमाधमसंज्ञंकंबूलंजातं कुतः अत्रहिचंद्रोमेषेस्वगृहोच्चाधिकारेनास्तिस्वद्रेक्काणस्तुनसंभवति प्रायःस्वनवांशोस्ति शनिस्तुनी

मेषस्थेऽज्ञोशनीत्यादिदृष्टांतान्मंदशीघ्रयोः एकर्क्षावस्थितामित्थशालादीनपरेजगुः ५१

चस्थएवतथा कर्कस्थेचंद्रे भूसुवामंगलेनकर्काख्यनीचस्थानगतेनकृतपरस्परमुथशिलेसत्युत्तमाधमकंबूलंजातं कुतःअत्रहिचंद्रः स्वगृहस्थः भौमोनीचस्थःतथास्त्रियांकन्यास्थेचंद्रेकविनाशुक्रेणकन्याख्यनीचराशिगतेनसहमुथशिलेकृतेसति मध्यमाधमकंबूलंजातं कुतःचंद्रःस्व नवांशेस्तिशुक्रोनीचेस्ति अत्रापिचंद्रस्यस्वद्रेक्काणस्तुनसंभवति तथामकरस्थेचंद्रेगुरुणामकराख्यनीचराशिगतेनसहमुथशिलेसति मध्यमा धमकंबूलंजातम् कुतःअत्रचंद्रःस्वद्रेक्काणेस्वनवांशेवास्ति गुरुर्नीचे अत्रापिस्वद्रेक्काणस्तुनसंभवति तथामीनस्थेचंद्रेबुधेनमीनाख्यनी

चस्थितेनमुथशिलेसतिमध्यमाधमकंबूलंजातम् कुतः अत्रचंद्रः स्वद्रेक्काणेस्वनवांशेस्तिबुधोनीनेस्ति इदमुदाहरणंपंचकंसुभंनसुभफलदंने-
त्यर्थः ५१ अथैषामतंदृष्टांतेनैवदूषयति तदयुक्तमितिशीघ्रमंदगतिग्रहयोरेकराशिस्थयोरेवमुथशिलादियोगोविचार्यइति यत्केषांचिन्म-
तंतदयुक्तनयुक्तिसहमित्यर्थः कुतइत्यतआह नीचगस्येति लग्नाधीशकार्याधीशयोर्मध्येकेनचिदेकेनग्रहेणस्वनीचराशिगतेनस्वनीचराशि

तदयुक्तंनीचगस्यनीचेनरिपुणारिपोः इत्थशालंकार्यनाशीत्युक्तंतत्रयतःस्फुटम् ५२

गतेनस्वनीचराशिगतस्यतदितरग्रहस्यनोदित्थशालंतत्कार्यनाशीत्युक्तं नहिद्वयोर्ग्रहयोरेकंनीचस्थानंभवति तथारिपुणारिपोर्लग्नेशकार्येश
योःपरस्परवैरेसतियन्मुथशिलंतत्कार्यनाशीत्युक्तम् यतःकारणात्तत्रसमरसिंहकृततताजिकसंज्ञातंत्रेस्फुटंप्रकटार्थमुक्तमस्तितद्वाक्यंच यदि
नीचोनीचेनचमुथशिलकारीतथारिपुर्द्विषता तत्कंबूलनेष्टंचंद्रोपिविनाशकोमुष्मिन् १ अत्रद्वितीयोयोगः एकराशिस्थयोरपिसंभवतीतिनदूष-
णत्वेनोपन्यसनीयः ग्रंथकर्त्रातु आकरग्रंथसंदर्भवशाल्लिखितः ५२ ७ ७ ७ ७ ७

अथप्रकारांतरेणफलोत्पत्तिज्ञानार्थंकंबूलयोगस्यभेदांतरमाह लग्नकार्येति पूर्वंतुलग्नाधीशकार्याधीशयोरभिन्नाधिकारस्थितयोश्चंद्रेणमुथशिलेकंबूलमुक्तम् इदानींतुतयोरप्यधिकारभेदउच्यते यत्रलग्नाधीशकार्याधीशयोर्मुथशिलयोगोविचार्यते तत्रतयोर्मध्येएकःस्वनीचगतोस्ति अन्यः द्वितीयः स्वक्षादिपदहीनःस्वगृहे स्वोच्चे स्वहद्दायांस्वद्रेष्काणेस्वनवांशेस्वनीचेस्वशत्रुक्षेत्रेवानभवति अर्थात्समाधिकारगतोस्ति अत्रसमाधिकारगतश्चंद्रश्चेन्मुथशिलंकरोति तदापिकंबूलाख्योयोगःस्यात् ५२ अथसदृष्टांतमेतस्यफलमाह तत्रेति तत्रतादृशेकंबूलयोगेकार्यल्पताज्ञेया तत्र

लग्नकार्यपयोरित्थशालेचैकोस्तिनीचगः स्वक्षादिपदहीनोऽन्योऽत्रेंदुःकंबूलयोगकृत् ५३ तत्रकार्यल्पताज्ञेयायथाजात्यन्यमर्थयन् अन्यजातिःपुमानर्थंतथैतत्कवयोविदुः ५४ यस्याधिकारःस्वक्षादिःशुभोनाप्यशुभोपिच केनाप्यदृश्यमूर्तिश्चसशून्याध्वगइष्यते ५५

दृष्टांतः अन्यजातिःपुमान्जात्यन्यंविजातीयमर्थयन् प्रार्थयन्सन् यथा अर्थंस्वल्पंलभतेइत्यध्याहारः तथैतत्कंबूलंकवयःपंडिताविदुर्जानंति अर्थाद्यदासजातीयमर्थयेत् तदातस्मैलज्जावशात्बह्वपिकदाचित्प्रयच्छतिइत्यर्थः ५४ अथगैरिकंबूलंवस्तुकामस्तदुपयोगित्वेनशून्यमार्गगग्रहलक्षणमाह यस्येति यस्यग्रहस्यस्वक्षादिस्वगृहस्वोच्चस्वहद्दास्वद्रेष्काणस्वनवांशात्मकःशुभःशुभफलदोधिकारोनास्ति अशुभोपिनीचशत्रुराशिगतःअशुभःअशुभफलदोधिकारोपिनास्ति पुनःकेनापिशुभग्रहेणपापेनवाऽदृश्यमूर्तिरदृष्टःशून्याध्वगःशून्यमार्गगइष्यते उच्यते अत्रार्थेसंमतिर्नास्ति

समरसिंहेनानुक्तत्वात् ५५ अथशून्यमार्गगलक्षणंप्रतिपाद्यगौरिकंबूललक्षणमाह श्लोकद्वयेन लग्नकार्येइति लग्नाधीशकार्याधीशयोरित्थशालेस
ति तत्रशशीचंद्रश्चेच्छून्याध्वगः शून्यमार्गगोभवति शून्यमार्गगः कथंजातइत्यतआह उच्चादिपदशून्यत्वात् स्वोच्चम् आदिशब्देनस्वगृहस्वद्रेष्काणस्व
नवांशस्वनीचस्वशत्रुभएतत्स्थानस्यशून्यत्वाद्रहितत्वादित्यर्थः ५६ अतएतादृशचंद्रस्यकेनचित्लग्नाधीशकार्याधीशयोर्मध्येकेनचिदेकेनमुथशिल

लग्नकार्येशयोरित्थशाले शून्याध्वगः शशी उच्चादिपदशून्यत्वान्नेत्थशालोस्यकेनचित् ५६
यद्यन्यर्क्षंप्रविश्यैषस्वर्क्षोच्चस्थेन्यशालवान् गौरिकंबूलमेतत्तु पदोनेनाशुभंस्मृतम् ५७

योगश्चेन्नभवति

एतादृशश्चंद्रोयदिराश्यंतेवर्तमानः सन्नन्यर्क्षमग्रिमराशिंप्रविश्ययस्मिन्राशौप्रविष्टः सराशिर्यस्यग्रहस्यस्वगृहंस्वोच्चंवासग्रहस्तस्मिन् यदितिष्ठे
त्तेनग्रहेणसहयदिचंद्रोमुथशिलंकरोति तदागौरिकंबूलसंज्ञकोयोगोभवति एतद्गौरिकंबूलंपूर्वोक्तकंबूलभेदतुल्यफलदंज्ञातव्यम् विशेषेयदि
तु अन्यराशिगतश्चंद्रस्तद्राशिस्थेनग्रहेणपदोनेनस्वगृहाद्यधिकाररहितेनमुथशिलंकरोति तदातद्गौरिकंबूलमशुभमनिष्टफलदंस्मृतम् ५७

अथास्यगौरिकंबूलस्योदाहरणंश्लोकत्रयेणाह लप्स्येइति अहंसुखंसौख्यंलप्स्येप्राप्स्यामिनवेतिप्रश्नेक्रियमाणेसति तस्मिन्कालेसिंहलग्नम-
स्ति तस्यस्वामीसूर्यःक्रियेमेषे अष्टांशैरष्टभिरंशैरुपलक्षितोस्ति सुखभवनंचतुर्थंवृश्चिकाख्यंतस्यस्वामीभौमःकुंभेरविमिद्वादशांशैरुपलक्षितो-
स्ति तयोर्लग्नाधीशकार्याधीशयोःसूर्यभौमयोःपरस्परमुथशिलयोगोस्ति तत्रास्मिन्योगेसतिइंदुश्चंद्रःकन्यायामस्तिचरमेंशकेत्रिंशेंशे ५८ अ-
त्रविद्यमानस्यस्वर्क्षादिस्थाधिकारहीनस्याऽस्यचंद्रस्यलग्नाधीशकार्याधीशयोर्मध्येकेनापिदेकेनमुथशिलयोगोनास्ति परंतु चंद्रस्तुलागृहंगंतु-

लप्स्येसुखमितिप्रश्नेसिंहलग्नेरविःक्रिये अष्टांशेःसुखपःकुंभेभौमोंऽशैरविमितयोः ५८ इत्थशालोस्तितत्रेंदुःकन्यायांचरमेंशके
स्वर्क्षादिपदहीनस्यनेत्थशालस्यकेनचित् ५९ सत्त्वाग्वगेनशशिनान्यर्क्षस्थेनेत्थशालकृत् गौरिकंबूलमन्येनसहायाल्लाभदायकम् ६०

कामोस्ति तत्तुलागृहंशनेरुच्चमस्ति अतःतुलास्थेनशनिनासहशीघ्रगामित्वात् अन्यराशिस्तुलातत्रगतश्चंद्रोमुथशिलकारीभवति एतदेवंविधं
ग्रहसंस्थानगौरिकंबूलाख्यंजातं अथास्यफलमुच्यते अन्येनतृतीयेनसहायभूतेनलाभंवांछितकार्यसिद्धिरूपंददाति
५९ उदाहरणकुंडलीयथा अस्मिन्नेवयोगेतुलाराशौबुधादिस्तिष्ठति यस्यैकोप्यधिकारःशुभोऽशुभोनास्तितत्रगतश्चंद्रो
बुधादिनाकृतमुथशिलश्चेत्तदा अनिष्टफलंगौरिकंबूलंज्ञेयम् अत्रोदाहरणेसंमतिर्नास्ति समरसिंहेनानुक्तत्वात् ६०



ता०
०

अथखल्लासरयोगस्यलक्षणमाह शून्यइति अत्रकेनचिदंकेनेतिपदमध्याहार्य्यम् समरसिंहेनापीत्युक्तत्वात् लग्नाधीशकार्याधीशयोर्मुथ प्र·१
शिलयोगस्त्वपेक्षितएव तत्रपूर्वोक्तलक्षणेनचंद्रः शून्येऽध्वनिशून्यमार्गगोस्ति एतादृशश्चंद्रउभयोर्लग्नाधीशकार्याधीशयोर्मध्येकेनचिदंकेनस
हमुथशिलयोगवान्नभवति अथवातादृशश्चंद्रस्तेनलग्नाधीशेनकार्याधीशेनवायुतोपिनास्ति सयोगःखल्लासरनामकोज्ञेयः अयंनशुभदः की
दृशः कंबूलफलनाशकः मुथशिलयोगेसति केवलयोगेवाकंबूलंपूर्णंभवति अत्रतुकेनापिसहमुथशिलयोगाभावात् युक्त्यभावाच्चाकंबूलफ

शून्येध्वनींदुरुभयोर्नेत्थशालोनवायुतिः खल्लासरोनशुभदः कंबूलफलनाशनः ६१ अस्तनीचारिपुवक्र
हीनभाद्दुर्बलोमुथशिलंकरोतिचेत् नेतुमेषनविभुर्यतोमहाः तेमुखेऽपिनसकार्य्यसाधकः ६२

लंनाशयति ६१ अथरद्दयोगलक्षणमाह अस्तेति योग्रहोऽस्तंगतःस्यादथवानीचगतःस्यादथवाशत्रुगृहेस्यादथवावक्रीस्यादथवाही
नाऽत्यल्पाभादिसियस्यसतेजोरहितइत्यर्थः एतादृशोग्रहोदुर्बलोज्ञेयः यदिदुर्बलोग्रहः केनापिभावस्वामिनासहमुथशिलंचेत्करोति स ४०
ग्रहोऽतेमुखेप्यादावपितद्भावकार्यसाधकोनभवति यतःकारणादेषग्रहोमहस्तेजोनेतुंनविभुःसमर्थोनभवति ६२ ७ ७

अथताद्दशस्यरद्दसंज्ञस्यनिर्बलग्रहस्यस्थानविशेषेस्थित्वासमयविशेषेणफलपाकमाह केंद्रस्थइति कार्याधीशोयोदुर्बलोग्रहः केंद्रस्थः सन् आपोक्लिमगं आपोक्लिमस्थानगतंलग्नाधीशंग्रहंयुनक्तिमुथशिलंकरोति तदाविशिष्टंकार्यमादितः प्रथमतोभूत्वाऽंतेपरिणामेनश्यतिनष्टंभवति यदि आपोक्लिमस्थोग्रहः केंद्रस्थानगतंग्रहंयुनक्तिमुथशिलंकरोति तदापूर्वंप्रथमतः विनश्यनाशंप्राप्यपश्चात्अंतेविशिष्टंकार्यंभवतीतिवाच्यम् ६३

केंद्रस्थआपोक्लिमगंयुनक्तिभूत्वादितोनश्यतिकार्यमंते आपोक्लिमस्थोयदिकेंद्रयातंविनश्यपूर्वं
भवतीहपश्चात् ६३ मंदस्वभोच्चादिपदेस्थितश्चेत्पदोनशीघ्रेणकृतेत्यशालः तत्रापिकार्यंभवती
तिवाच्यंवक्रादिनिर्वीर्यपदेनचेत्स्यात् ६४

अथदुष्फालिकुत्थयोगलक्षणमाह मंदस्वेति मंदोमंदगतिग्रहःस्वभोच्चादिस्वक्षेत्रेस्वोच्चे आदिशब्देनस्वहद्दायांस्वद्रेक्काणेस्वनवांशेवास्थितःसन् पदोनेनशीघ्रेणस्वभोच्चादिशुभाधिकाररहितेनशीघ्रगतिग्रहेणकृतेत्यशालश्चेद्भवति तत्रापीष्टंकार्यंभवतीतिवाच्यम् चेच्छीघ्रगतिग्रहः वक्रादिनिर्वीर्यपदेप्रागुक्तास्तनीचरिपुवक्रहीनभाइत्यादिनिर्बलस्थानेषुचेन्नस्यात् ६४

अथदुत्योत्थदिवीरयोगमाह वीर्योनिताविति यदालग्नाधीशकार्याधीशौवीर्योनितौ अस्तनीचारिपुवक्रहीनभाइत्याद्युक्तरीत्यानिर्बलौस्यातां त योर्लग्नाधीशकार्याधीशयोर्मध्येकश्चिदेकस्तृतीयेनग्रहेणस्वस्वदीप्तांशगेनस्वगृहोच्चस्वहद्दादिगतेनसहयुनक्तिमुथशिलंकरोति तदान्यसाहाय्यतस्तृतीयोयः कश्चित्सहायभूतस्तत्सकाशात्कार्यंसंतः अतिशिष्टाउशंतिवांछंति अथवायदान्यौयौकौचिद्द्वौग्रहौबलिनौस्वग्रहोच्चादिगौसंतौलग्नाधीशकार्याधीशा

वीर्योनितौकार्यविलग्ननाथौस्वदीप्तांशगेनान्यतरोयुनक्ति अन्यौयदाद्वौबलिनौतदान्यसाहाय्यतःकार्यमुशंतिसंतः ६५ बलीराश्यं

तगोन्यदृग्गामिदीप्तांशकैर्महः दत्तेऽन्यस्मैकार्यकृत्स्तंबीरोलग्नकार्यपौ ६६

योर्मध्येकेनचिदेकेनसहयुनक्तःमुथशिलंकुरुतस्तदाप्यन्यसाहाय्यतः

कार्यमुशंतिसंतइति ६५ अथतंबीरयोगस्यलक्षणमाह बलीति यदालग्नकार्यपौःलग्नाधीशकार्याधीशयोःपरस्परंमुथशिलयोगोनभवेत्तदाऽनयोर्म-

ध्येकश्चनबलीग्रहःराश्यंतगःस्वाक्रांतराश्यंतिमांश २९ वर्त्तीसन् यदान्यदृग्गामी अग्रिमराशिगमनकामःस्वदीप्तांशकैरन्यस्मै अग्रिमराशिविद्यमाना

य ग्रहायमहस्तेजोदत्तेसतंबीरयोगः अग्रिमराशिगतोग्रहश्चेत् स्वगृहादिबलयुक्तस्तदायंयोगःकार्यकरोऽभीष्टकार्यकर्त्तास्यात् ६६ ४

अथकृत्यलक्षणमाह अत्रकृत्यशब्देनयवनभाषयाबलीग्रहउच्यते तत्रबलमनेकप्रकारंतत्रकांश्चित्प्रकारान्प्रथमश्लोकेनाह लग्नइति अत्रग्र
होबलीत्यन्वयः तत्रापिसर्वापेक्षयालग्नस्थोबलीतदभावेकेंद्रस्थश्चतुर्थसप्तमदशमस्थानेषुबलीपरंतुलग्नस्थापेक्षयान्यूनबलः तदभावेऽस्यकेंद्र
स्यनिकटेपणफरेद्वितीयपंचमेकादशस्थानेषुबलीकेंद्रस्थापेक्षयान्यूनबलः तदभावेयोग्रहोविलग्नदर्शीविलग्नंपश्यतीतिविलग्नदर्शी तृतीयनवम-
स्थोबलवान्भवति यद्वानिकटोपिवाऽस्यविलग्नदर्शीतिविशेषणविशेष्यभावः अस्यकेंद्रस्यनिकटेपणफरेआपोक्लिमेचस्थितःसन्विलग्नदर्शी-

लग्नेऽथकेंद्रेनिकटेपिवास्यविलग्नदर्शीस्वगृहोच्चहद्दे मुसल्लहेस्वेनिजहद्दगोवाबलीग्रहोमध्यगतिस्त्वशीघ्रः ६७

तृतीयपंचमनवमैकादशस्थः सबलवानित्यर्थः अन्येषुषष्ठद्वादशवर्जितपणफरापोक्लिमानांनिकटपदेनसंग्रहः षडादिष्वपिगणितागतदृष्टौसोऽपि-
दृश्यंनिहल्लीत्यर्थइत्याहुः तथायोग्रहः स्वगृहेस्वोच्चेस्वद्रेक्काणेस्वमुसल्लहेस्वनवांशेस्वहद्दायांवावर्त्तमानोबली तथामध्यगतिः नंदाक्षाभुजगारवेरि-
त्याद्युक्तमध्यगतितुल्यःस्पष्टगतिर्ग्रहोबलवान्भवति तथा अशीघ्रोनशीघ्रोऽशीघ्रः मध्यगत्यपेक्षयाऽल्पगतिर्ग्रहोबली ६७ ७ ७२

अथान्यान्प्रकारानाह कृतोदयइति योग्रहः कृतोदयः उदितः सबली तथामार्गगतिर्मार्गीग्रहोबली तथाशुभेनशुभग्रहेणयुतः ईक्षितोवासबलीत
थाक्रूरगतस्य पापग्रहस्यक्षुताख्ययाचतुर्थदशमसप्तमैकराशिदृष्ट्यानाधिगतः नदृष्टः सबली तथाक्रूरेणनयुक्तः पापग्रहेणयुक्तोनभवति एवंसामान्य
तोग्रहबलमुक्त्वाइदानींसमयबलमाह सायंचसितेंदुभौमाइति इदमग्रिमश्लोकेनसंबध्यते ६८ अथान्यत्प्रकारमाह यदेति सितेंदुभौमाः शुक्रचंद्रभौ
माःसायंसंध्याकालेयदोदयंतेतदाबलिनः जीवार्कजौगुरुशनीअपररात्रिभागेअर्धरात्राद्रुपरिभागेबलिनौतथानराःपुरुषग्रहाः सूर्यभौमगुरवोऽह्निदिव

कृतोदयोमार्गगतिः शुभेनयुतोक्षितः क्रूरखगस्यदृष्ट्या क्षुताख्ययानाधिगतोनयुक्तः क्रूरेणसायंचसितेंदुभौमाः ६८ यदोदयंतेपररात्रि
भागेजीवार्कजावह्निनराः सवीर्याः अन्येनिशीनस्यनवैकभागेस्थिताःस्थिरर्क्षेचबलेनयुक्ताः ६९ सेबलिनः अन्येग्रहाः चंद्रबुधशुक्रशनयोनि-
शिरात्रौबलिष्ठाः तथाइनस्यसूर्यस्यनैकभागेस्थिताः सूर्योयद्राशिनवांशेतस्मिन्नेवनवांशेयदिग्रहानस्युस्तदापिबलिनोभवंति तस्मादन्येनिशीनस्यनवैक-
भागेस्थिता इतिपाठः साधीयान् अन्येनिशीनस्यतथैकभागइत्यपिपाठः उक्तंचसमरसिंहेसूर्यस्यनैकभागेस्थिरराशौवातदाचतेबलिनः इत्यत्रसूर्यस्यनै
कभागेइतिपाठंधृत्वा एकभागेएकराशिनवांशेइतिव्याख्यानंकुर्वंति तन्नअस्तमितस्याप्येवंसंभवात् नचास्तमितः क्वचिद्ग्रंथेबलीश्रूयतेप्रत्युतअस्मिन्ने
वग्रंथेनिर्बलःश्रूयते तस्मात्सूर्यस्यनैकभागइतियुक्तः पाठः तथास्थिरर्क्षेचवृषसिंहवृश्चिककुंभराशिस्थाः ग्रहाः बलेनयुक्ताः बलिष्ठाज्ञेयाः ६९

अथान्यान्प्रकारानाह स्त्रियइति स्त्रियः स्त्रीग्रहाश्चतुर्थाच्चतुर्थभावमारभ्य भषट्कगाः षड्राशिगताः बलिनः स्युः चतुर्थाद्यावन्नवमांतम् तावन्मध्येवर्त्तमानाबलिनः स्युरित्यर्थः पुरुषाः पुरुषग्रहाः वियद्भावाद्दशमभावमारभ्य षड्राशिगताः बलिनः स्युः दशमाद्यावत्तृतीयं तावन्मध्येवर्तमानाबलिनः स्युरित्यर्थः तथाओजभगा विषमराशिस्थाः पुमांसः पुरुषग्रहाबलिष्ठाः अपरेस्त्रीग्रहाः समेसमराशौबलिनः स्युः एतेषुपूर्वोक्तेष्वनेकेषु बलभेदेषु विशेषं शुभाधिकाररूपं विमृश्य विचार्य फलंशुभं निगद्यं वक्तव्यम् ७० अथदुरफलक्षणमाह अत्रयवनभाषयादुरफशब्देननैर्बल्यमुच्यते तच्चानेकप्रकारम् तत्रकियतः प्रकारान्

स्त्रियश्चतुर्थात्पुरुषावियद्भाद्भषट्कगाओजभगाःपुमांसः समेपरेस्युर्बलिनोविमृश्यविशेषमेतेषुफलंनिगद्यम् ७० लग्नात्सषष्ठाष्टमेंत्येऽनृजुररिगृहगोनीचगोवक्रगामीक्रूरैर्युक्तोऽस्तगोवायदिचमुथशिलीक्रूरनीचारिभस्थैः

प्रथमश्लोकेनाह लग्नादिति अत्रानिर्बलोयमित्यर्थः लग्नाद्वर्षलग्नान्मासदिनप्रश्नलग्नाद्वायः कश्चिद्ग्रहः षष्ठेस्थानेऽथवाष्टमेऽथवांत्येद्वादशेवर्त्तमानः सन्निर्बलोभवति तथानृजुर्वक्रगतिग्रहोनिर्बलः तथाअरिगृहगः शत्रुराशिस्थोनिर्बलः तथानीचगः नीचराशिगतः निर्बलः तथावक्रगामीवक्राभिलाषीग्रहोनिर्बलः तथाक्रूरैः पापग्रहैर्युक्तोग्रहोनिर्बलः तथाऽस्तगः अस्तंगतोग्रहोनिर्बलः तथायदिक्रूरनीचारिभस्थैः मुथशिलीयदिकश्चिद्ग्रहः क्रूरग्रहेणनीचराशिगतेनशत्रुराशिगतेनवाग्रहेणमुथशिलीमुथशिलंकरोतिसनिर्बलः तथाक्रूरेणास्तुनृदृष्याच्चतुर्थदशमसप्तमैकस्थानगतदृष्याद्दृश्योन्निर्बलः तथाव्ययारिमृतिगौद्वादशषष्ठा

ष्टमस्थानस्थितैर्ग्रहैः सहेत्थशालं विधित्सुः कर्त्तुमिच्छति अथवा कुर्वन्मुथशिलं करोति सनिर्बलः तथास्वगृहनगभगः स्वगृहात् ग्रहस्य यत्गृहं य-
थादेशो भौमस्य तस्मान्नगभगः सप्तमं यत्स्थानं तत्रगतो ग्रहो निर्बलः ग्रहाधिष्ठितो यो राशिः सचेत् ग्रहस्य स्वगृहात्सप्तमो भवति तदा निर्बलइ-
त्यर्थः तथा राहुपुच्छास्यवर्त्ती राहोः पुच्छं राहुभुक्तांशा आस्यं मुखं राहुभोग्यांशाः तत्र तिष्ठति यो ग्रहः सनिर्बलः ७१ अथान्यमप्रकारमा-
ह अनीक्षमाणइति यो ग्रहस्तनुं लग्नमनीक्षमाणो नेक्षते स निर्बलः तथा अस्तभागस्थितः सूर्यो यद्राशिनवांशोऽस्ति तस्मात्सप्तमो यो नवांशः

सुहृद्ध्यान्क्रूरदृष्टोव्ययरिपुमृतिगोरित्थशालं विधित्सुः कुर्वन्वानिर्बलोयंस्वगृहनगभगो राहुपुच्छास्यवर्ती ७१ अनीक्षमाणस्त-
नुमस्तभागस्थितः स्वभोच्चादिपदैश्च शून्यः क्रूरेसराफीनसवीर्ययुक्तः कार्यं विधातुं न विभुर्यतोसौ ७२

तत्रस्थितो ग्रहो निर्बलः उक्तंच समरसिंहेन सूर्यास्तभागसंस्थइति तथा यो ग्रहः स्वभोच्चादिपदैः स्वगृहस्वोच्चस्वहद्दास्वद्रेष्काणस्वनवांशाख्यैः

पदैरधिकारैः शून्यो रहितः सनिर्बलः तथा यो ग्रहः क्रूरेसराफीपापग्रहेण सह ईसराफयोगं करोति स ग्रहो वीर्ययुक्तो न भवति यतोसौ ग्रहः का-
र्यं मनोभिलषितं विधातुं कर्तुं न विभुः न समर्थो भवति ७२ छ छ छ छ छ

एवंसर्वेषांग्रहाणांसामान्यतःदुरष्फमुक्त्वाइदानींचंद्रस्याऽत्यंतदुरष्फविशेषमाह चंद्रइति सूर्यात्सूर्याधिष्ठितराशेःसकाशात्द्वादशेस्थानेयदिचं
द्रोभवतिसनिर्बलः तथावृश्चिकाद्येखंडे पूर्वार्द्धेनेष्टः अशुभफलदःतथातुलायाः तुलाराशेः अंत्येउत्तरार्द्धे विशेषान्नेष्टः तथा राशीशेनचंद्रोयस्मिन्
राशावस्ति तद्राशीश्वरेण अदृष्टमूर्त्तिर्नदृष्टस्तथासर्वैर्ग्रहैर्नदृष्टः सनिर्बलः तथाशून्यमार्गः प्रागुक्तलक्षणलक्षितशून्यमार्गगश्चेच्चंद्रोभवति तदा
पादोनोनिर्बलोज्ञेयः ७३ अथान्यद्दुरष्फंचंद्रस्याह क्षीणइति चंद्रइत्यनुवर्त्तते क्षीणः अल्पांगः कृष्णाष्टमीमारभ्यशुक्लाष्टमीपर्यंत

चंद्रःसूर्याद्द्वादशेवृश्चिकाद्येखंडेनेष्टोंत्येतुलायांविशेषात् राशीशेनादृष्टमूर्त्तिर्नसर्वैर्दृष्टोज्ञेयःशून्यमार्गःपदोनः ७३ क्षीणोभां
तेनाशुभोजन्मकालेपृच्छायांवाचंद्रएवंविचिंत्यः शुक्लेभौमःकृष्णपक्षेर्कसूनुःक्षुद्दृष्ट्यंदुंवीक्षतेनोशुभोऽसौ ७४

मिति यावत्कृष्णैकादशीमारभ्यदशीतपर्यंतंक्षीणइतिकेचित् तथाभांतेराशेरंतेराशिरंतिमनवांशेवर्त्तमानः सन्नोशुभोदुष्टफलदःस्या
त् एवममुनाप्रकारेणचंद्रोजन्मकालेतथापृच्छायांप्रश्नलग्नेवाविचिंत्यः शुक्लेशुक्लपक्षेभौमः कृष्णपक्षेऽर्कसूनुः शनैश्चरः एतौक्षुद्दृष्ट्याच
तुर्थदशमसप्तमैकस्थानदृष्ट्याचेदिंदुंवीक्षेते पश्यतः तदासौचंद्रः नोशुभःशुभफलदोनभवति ७४ ॐ ॐ ॐ

अथशुभस्यापिचंद्रस्यकेनचिद्योगविशेषेणदोषाल्पतामाह शुक्लइति शुक्लेशुक्लपक्षेदिवादिवसेनृगृहगःपुरुषराशयोमेषमिथुनसिंहादयस्तेषुगतोऽर्कसु-
तःशनिर्यदिशशांकंचंद्रंपश्येत्तदादुरुष्फदोषस्याल्पतांन्यूनत्वंवितनुते अपरथा अन्यथायद्यर्कसुतोनपश्येत्तदादुरुष्फदोषस्यबहुत्वंबाहुल्यंवितनुते तथा
कृष्णेकृष्णपक्षेनिशिरात्रौसमर्क्षगतः समराशयोवृषकर्ककन्यादयस्तेषुगतःकुजोयदिचंद्रंप्रपश्येत्तदाल्पतांदुरुष्फदोषस्यन्यूनत्वंवितनुते यदि-
भौमोनप्रपश्येत्तदादोषबहुत्वंवितनुते सर्वमिदंप्रश्नेप्रश्नलग्नेऽथवाजनुषिजन्मलग्नेबुद्धिमताऊहनीयंविचार्यम् अर्थाद्वर्षलग्नादिष्वपिविचार्यं

शुक्लेदिवानृगृहगोर्कसुतःशशांकंकृष्णेकुजोनिशिसमर्क्षगतःप्रपश्येत् दोषाल्पतांवितनुतेपरथाबहुत्वंप्रश्नेथवाजनुषिबुद्धिमतोहनी
यम् ७५ नंद९त्रि३षट्६लग्न१भव११सुत५व्यया१२इनाद्धर्षपदंस्वभोच्चम् त्रिभात्रिभलग्नपतःक्रमेणस्त्रीणांनृणांरात्रिदिनचतुर्षु ७६

मिति ७५ एवंषोडशयोगाःसमाप्ताः अथसर्वग्रहाणांचत्वारिहर्षस्थानान्याह नंदाग्निषडिति तत्रप्रथमंहर्षस्थानमुच्यते इनात्सूर्यमारभ्यसर्वेषां
ग्रहाणांनंदइत्यादिहर्षस्थानानिक्रमेणभवंति लग्नादितिसंबंधः तद्यथालग्नान्नवमस्थःसूर्योहर्षितःचंद्रस्तृतीयस्थःभौमःषष्ठस्थःलग्नस्थोबु
धःगुरुरेकादशस्थःशुक्रःपंचमस्थःशनिर्व्ययस्थोहर्षदइत्यर्थः अथद्वितीयंहर्षस्थानमुच्यते स्वभोच्चमितियदाग्रहःस्वगृहेभवति अथवास्वोच्चे
भवति तदाहर्षितोज्ञेयः स्वगृहेयद्बलंतदेवस्वोच्चेउभयत्रापिपंचविंशोपकाबलंनतुद्विगुणम् अथतृतीयहर्षस्थानमुच्यते त्रिभामिति लग्न

भतोलग्नराशेः सकाशात् त्रिभंत्रिभंराशित्रयंराशित्रयंक्रमेणस्त्रीणांस्त्रीग्रहाणांनृणांपुरुषग्रहाणांहर्षपदंभवति अयमर्थः लग्नाद्द्वितीयतृतीयराशिषुवर्तमानाः स्त्रीग्रहाः हर्षिताः ततस्त्रिषुराशिषुचतुर्थपंचमषष्ठस्थानेषुवर्त्तमानाः पुरुषग्रहाः हर्षिताः पुनरपि सप्तमाष्टनवमस्थानेषुस्त्रीग्रहाहर्षिताः पुनर्दशमैकादशद्वादशस्थानेषुपुरुषग्रहाहर्षिताः अथचतुर्थहर्षस्थानमुच्यते रात्रीति तेषांस्त्रीपुरुषग्रहाणांरात्रिदिनेरात्रिदिवसयोर्हर्षदत्वम् अयमर्थः रात्रौवर्षप्रवेशेस्त्रीग्रहाणांहर्षदत्वम् दिवावर्षप्रवेशेपुरुषग्रहाणांहर्षदत्वम् तेषुचतुर्षुस्थानेषुस्थिताग्रहाः बलिनोभवंति इहताजिकेचंद्रशनिशुक्रबुधानार्यः स्त्रीग्रहाः रविभौमगुरवः पुरुषग्रहाः अत्रनपुंसकानसंति अत्रविंशतिविंशोपकाःपरमबलम् २० तत्रचत्वारिहर्षस्थानानिइतिकारणाच्चतुर्भिर्भक्तंलब्धाः पंचविंशोपकाः एवंचतुर्षुहर्षस्थानपदेषुप्रत्येकंपंचविंशोपकाः बलंतेस्याप्याः अस्योदाहरणम् सूर्यादिग्रहाः लग्नान्नंदइत्यादिस्थानेषु नसंति अतः प्रथमंहर्षपदंनप्राप्तं अत्रगुरुः स्वगृहेशनिः स्वोच्चेऽस्ति अतोद्वितीयहर्षपदंप्राप्तंतत्रबलंपंचविंशोपकाः लग्नात्सप्तमाष्टमनवमस्थाः स्त्रीग्रहाः शनिशुक्रबुधाःसंति दशमस्थानेपुरुषग्रहः सूर्यस्तिष्ठति अतस्तेषांतृतीयंहर्षपदंप्राप्तम् अत्रापिबलंपंचविंशोपकाः अत्रदिवावर्षप्रवेशः अतः पुरुषग्रहाणांरविभौमगुरूणांचतुर्थहर्षपदंप्राप्तम् अत्रापिबलंपंचविंशोपकाः एवंसर्वेषांग्रहाणांहर्षस्थानानितेषुप्रत्येकंबलानितदेस्यानिलिख्यंते ७६

| | र | चं | मं | बु | गु | शु | श |
|---|---|---|---|---|---|---|---|
| स्थानें | ० | ० | ० | ० | ० | ० | ० |
| स्त्रीपुं० | ० | ० | ० | ० | ५ | ० | ५ |
| रा-दि | ५ | ० | ० | ५ | ० | ५ | ५ |
| रा-दि | ५ | ० | ५ | ० | ५ | ० | ० |
| योग | १० | ० | ५ | ५ | १० | ५ | १० |

७७ इतिश्रीदिवाकरदैवज्ञात्मजविश्वनाथदैवज्ञविरचितेनीलकंठज्योतिर्विल्कृतसंज्ञातंत्रेषोडशयोगाध्यायःसव्याख्योदाहृतिः समासः छ

श्रीगर्गान्वयभूषणंगणितविच्चिंतामणिस्तत्सुतो ऽनंतोनंतमतिर्व्यधात्खलमतध्वस्त्यैजनुःपद्धतिम् तत्सू
नुःखलुनीलकंठविबुधोविद्वच्छिवानुज्ञयायोगान्षोडशहर्षभानिचतथासंज्ञाविवेकऽभ्यधात् ७७ छ
पुण्यं१ गुरु२ ज्ञान३ यशो४ थमित्र५ माहात्म्य६ माशाच७ समर्थतान८ भ्राता९ ततोगौरव१० रा
ज११ तात१२ माता१३ सुतो१४ जीवित१५ मंबु१६ कर्म१७ १ मांद्यं१८ मन्मथ१९ कलि२० परतःक्षमो
क्तं२१ शास्त्र२२ सबंधुसहमं२३ त्वथबंधकंच२४ मृत्योश्चपत्य२५ परदेश२६ धना२७ न्यदारा२८ स्यादू
न्यकर्म२९ सवणिक्३० त्वथकार्यसिद्धिः३१ २ उद्वाह३२ सूति३३ संतापाः३४ श्रद्धा३५ प्रीति३६ बलं
३७ तनुः३८ जाड्य३९ व्यापारसहमं४० पानीयपतनं४१ रिपुः४२ ३



अथसहमानयनमाह तत्रादौचतुर्भिःश्लोकैः पंचाशत्सहमान्याह पुण्यमितिस्पष्टार्थः १ २ ३ छ छ छ

४ अथपुण्यसहमसाधनमाह सूर्योनिति अह्निदिवसेवर्षप्रवेशश्चेत्तदाचंद्रमध्येरविः शोध्यः निशिरात्रौचेत्तदासूर्याच्चंद्रः शोध्यः लग्नंयोज्यं राश्यादिपुण्यसंज्ञंसहमंभवेत् अथसर्वत्रसहमानयनेविशेषसंस्कारउच्यते शोध्यस्येति शोध्यस्यशुध्याश्रयभयोरंतरालेलग्नराशिश्चे न्नास्ति तदासहमेएकोराशिर्योज्यइति तद्यथा योग्रहः शोध्यते न्यूनःक्रियतेसशोध्यः तस्यऋक्षंराशिः शोध्यग्रहराशेः सकाशादित्यर्थः शुध्याश्रयभयावत् तद्यथायस्मिन्ग्रहेशोध्योग्रहः शोध्यते सशुध्याश्रयोग्रहः तस्यभंराशिः अनयोःशोध्यशोधकयोरंतरालेमध्ये

शौर्यो ४३ पाय ४४ दरिद्रत्वं ४५ गुरुतां ४६ बुपयाभिधं ४७ बंधनं ४८ दुहिता ४९ श्वश्रू ५० पंचाशत्सहमानिहि ४ सूर्यो
नचंद्रान्वितमाह्निलग्नंवींदुर्कयुक्तंनिशिपुण्यसंज्ञम् शोध्यस्यशुध्याश्रयभांतरालेलग्नंनचेत्सैकभमेतदुक्तम् ५

चेल्लग्नंनभवति तदोक्तंराश्यादिपुण्यसहमंसैकभमेकराशिसहितंकार्यम् यदिशोध्यशोधकयोर्मध्येलग्नंभवति तदैकराशिर्नयोज्य इत्यर्थतःसिद्धम् अशोध्यस्यशुध्याश्रयेग्रहे इत्युपलक्षणंभावसहमेपिबोध्यम् अग्रेउक्तमस्ति वित्तपमर्थभावादितिपुण्याद्गौममिति सैत्रग्रहऋक्षभादिभवनंएतेराशिपर्यायाल्लग्नमितियोजकोपलक्षकंज्ञेयं उदाह० सूर्यः ९ । ७ । ३० । ६ चंद्रमध्ये ५ । २२ । ९ । ४७
शोधितः शेषं ८ । १४ । ३९ । ४१ ल० १८ । ३ । ५४ युतंजातंपुण्यं ९ । २ । ४३ । ३५ । ५ ७ ७

अथगुरुविद्यायशःसहमसाधनमाह व्यत्यस्तमिति अस्मात्पुण्यसहमसाधनाद्व्यत्यस्तंविपरीतंगुरुविद्ययोःसहमयोस्तुसंसाधनंकार्यम् तद्यथा दिवारविमध्येचंद्रःशोध्यःलग्नंयोज्यम् रात्रौवर्षप्रवेशश्चेत्तदाचंद्रमध्येरविः शोध्यः लग्नंयोज्यम् तेगुरुविद्यासहमेभवतः अथयशः सहमसाधनम् पुण्यसहमेनवियुक् ऊनःसुरेज्योगुरुःकार्यःदिवा निशिरात्रौविलोमंविपरीतंपुण्यसहममध्येगुरुः शोध्यः पूर्ववदितिलग्न-

व्यत्यस्तमस्माद्गुरुविद्ययोस्तुसंसाधनंपुण्यवियुक्सुरेज्यः
दिवाविलोमंनिशिपूर्ववत्तुयशोभिधंतत्सहमंवदंति ६

योगः शोध्यसैत्यादिसंस्कारःकार्यः तद्यशोऽभिधंयशःसहमंबुधावदंति उदाहरणम् रविमध्ये ९।७।३०।६ चंद्रः ५।२२।९।४७ शोधितःशेषम् ३०।१५।२०।१९ लग्नयुतम् ४।३।२४।१३ सैकंजातंगुरुसहमम् ५।३।२४।१३ इदमेवविद्यासहमम् ५।३।२४।१३ पुण्यसहमम् ९।२।४३।३९ गुरुमध्ये ८।२९।३५।१३ शोधितेशेषम् ११।२६।५१।३८ लग्नयुतंजातंयशःसहमम् ०।१४।५५।३२ ॥ ६॥

अथमित्रसहमसाधनमाह पुण्यसद्मेति दिवागुरुसद्मतः गुरुसहमतः पुण्यसद्मपुण्यसहमंत्यजेत् निशिरात्रौव्यत्ययोविपरीतंपुण्यसहममध्येगुरुसह-
मंशोधयेत् ततःसितेनशुक्रेणान्वितंयुक्तंकार्यम् अत्रलग्नयोगोनकार्यः शुक्रयुक्तत्वात्तनुवत् उक्तरीतितः सैकताकार्यासायथाशोध्यस्थशुक्राश्र
यभांतरालेशुक्रोनचेदितितत्बुधाःमित्रनामसहमंविदुः उदाहरणम् पुण्यसहमं९।२।४३।३५गुरुसहममध्ये५।३।२४।१३ शोधितेशेषं८।०।४०।३८
शुक्रेण७।२४।३१।४८ युतंसैकंजातंमित्रसहमं४।२५।१२।२६ ॥ ७ ॥ अथमाहात्म्याशासहमयोरानयनमाह पुण्यादिति पुण्यसहमाद्भौमंशोधये

पुण्यसद्मगुरुसद्मतस्त्यजेद्व्यत्ययोनिशिसितान्वितंचतत् सैकतातनुवदुक्तरीतितोमित्रनामसहमंविदुर्बुधाः ७ पुण्याद्भौमंशो
धयेदुक्तवत्स्यान्माहात्म्यंतन्नक्तमस्माद्विलोमम् शुक्रंमंदादह्निनक्तंविलोममाशाख्यंस्यादुक्तवच्छेषमूह्यम् ८ ७२

त् दिवाततः उक्तवल्लग्नयोगः सैकताचकार्यानक्तंरात्रौ अस्माद्विलोमंविपरीतंभौममध्येपुण्यसहमंशोधयेत् तन्माहात्म्यसहमंस्यात् अथाह्नि
दिवसेमंदाच्छनिमध्येशुक्रंविशोधयेत् नक्तंरात्रौविलोमम् शुक्रमध्येशनिः शोध्यः शेषंलग्नयोगाद्युक्तवदूह्यंउक्तरीत्याज्ञेयम् तदाशासहममि
च्छासहमंस्यात् उदाहरणम् पुण्यसहममध्ये९।२।४३।३५भौमे९।१४।३२।३६शोधितेशेषम्०।१८।१०।५९ लग्नयुतंसैकंजातंमाहात्म्यसहमम्
२।६।१४।५३ शनिमध्ये६।६।४६।५४ शुक्रे७।२४।३१।४८ शोधितेशेषं१०।१२।१८।६ लग्नयुतंसैकंजातंआशासहमम्११।०।२१।० ॥८॥

अथसामर्थ्यभ्रातृसहमयोरानयनमाह सामर्थ्यमिति आराद्भौमात्तनुपं लग्नस्वामिनं विशोध्य दिवसे नक्तं रात्रौ लग्नस्वामिमध्ये भौमं विशोधयेत् लग्नयोगः सै
कताच्च पूर्ववत्तत्सामर्थ्यसहमं स्यात् लग्नस्वामीचेद्भौमस्तदा किं कार्यमत आह तनुपेइति लग्नस्वामिनि भौमेजीवाद्विशुध्येत् सततं दिवारात्रौ च तत्सामर्थ्य
सहमं स्यात् अत्रगुरुमध्ये शनिः शोध्यः सदा अहोरात्रं ऊह्यः ज्ञेयः पुरावदिति लग्नयोगः सैकताच्चतद्भ्रातृसहमं स्यात् उदाहरणम् भौमात्तनुपं विशोध्यइ
त्युक्त अत्रलग्नस्वामी भौमोऽस्ति अतः कारणात् गुरुमध्ये ८।२९।३५।१३ भौमे ८।१४।३२।३६ शोधितेशेषम् ०।१५।३।३७ लग्नयुतं सैकं जातं सामर्थ्यसहमं ११।३६।३१

सामर्थ्यमारात्तनुपं विशोध्य नक्तं विलोमं तनुपे कुजे तु जीवाद्विशुध्येत्सततं पुरावद्भ्रातार्किहीनात्गुरुतः सदोह्यः ९ दिने गुरोश्चंद्रमपास्य नक्तं
रविं क्रमादर्कविधू चदेयौ रीत्योक्तया गौरवमर्कमार्किरपास्य वामं निशि राजताते १०

गुरुमध्ये ८।२९।३५।१३ शनौ ६।६।४८।५४ शोधितेशे
षं २।२२।४६।१९ लग्नयुतं सैकं जातं भ्रातृसहमं ४।१०।५०।१३ ॥९॥ अथगौरवराजतातसहमानयनमाह दिनइति दिने दिवसे गुरुमध्ये चंद्रः शो
ध्यः रविर्योज्यः नक्तं रात्रौ गुरुमध्ये रविं शोध्य चंद्रयोगः कार्यः उक्तयारीत्या गौरवसहमं भवति शोध्यस्य शुद्ध्याश्रयभांतरालेक्रमेण दिवारात्रौ सूर्य-
चंद्रौ न चेत्तदा सैकता कार्येत्यर्थः दिने वर्षप्रवेशे आर्किः शनिमध्ये अर्कं सूर्यं विशोध्य निशि रात्रौ वामं विपरीतं सूर्यमध्ये शनिमपास्य लग्नयोगः सैकता
च कार्या राजतातसहमे भवतः उदाह० गुरुमध्ये ८।२९।३५।१३ चंद्रे ५।२२।१।४७ शोधितेशेषं ३।७।३३।२६ रविणा ९।७।३०।६ युतं सैकं जातं गौरवसहमं

१।१४।५५।३१शनिमध्ये६।६।४८।५४सूर्येशोधिते९।७।३०।६शेषं८।२०।१८।४८लग्नयुतंजातंराजसहमं९।१७।२२।४२तातसहमंच९।१७।२२।४२॥१०॥ अथमातृपुत्रजीविताम्बुसहमानयनमाह मातेति दिवसेइंदुतश्चंद्रमध्येसितंशुक्रमपास्यसंशोध्यविलोमंनक्तंरात्रौसुक्रमध्येचंद्रःशोध्यःलग्नयोगःसैकतान्चकार्यातन्मातृसहमंस्यात् अहर्निशंदिवारात्रौवर्षप्रवेशेसति गुरुमध्येचंद्रः शोध्यःलग्नयोगःसैकतान्चकार्यातत्पुत्रसहमंस्यात् अथाह्निदिवसेशनिमध्येगुरुःशोध्यइदंनिशिवामंगुरुमध्येशनिः शोध्यःलग्नयोगःसैकतान्चकार्यातज्जीविताख्यंसहमंस्यात् अंबयासमंचमातुः सहमतुल्यं अंबुसहमं उदाहरणं

मातेंदुतोपास्यसितंविलोमंनक्तंकृतो ऽहर्निशमिंदुमीज्यात् स्याज्जीविताख्यंगुरुमार्कितोह्निवामंनिशीदंसममंबयांबु ११ कर्मज्ञमा रान्निशिवामसुक्तरोगाख्यमिंदुंतनुतःसदैव स्यान्मन्मथोलग्नपमिंदुतोऽन्हिवामंनिशीदुतनुपंसदार्कात् १२ चंद्रमध्ये५।२२।१।४७शुक्रेशोधिते७।२४।३१।४८ शेषं९।२७।३७।५९लग्नयुतंजातंमातृसहमं१०।१५।४१।५३ गुरुमध्येचंद्रे शोधितेशेषं३।७।२५।२६लग्नयुतंसैकंजातंपुत्रसहमं४।२५।२१।२० शनिमध्येगुरौशोधितेशेषं९।७।१२।४१ लग्नयुतंजातंजीविताख्यंसहमं९।२५।१७।३५ मातुःसहमसमेवांबुसहमं१०।१५।४१।५३॥११॥अथ कर्मरोगमन्मथसहमानयनमाह कर्मज्ञमिति दिवाभौममध्येबुधः शोध्यःनिशिरात्रौवामंबुधमध्येभौमः शोध्यःलग्नयोगःसैकतान्चकार्यातत्कर्मसहमंस्यात् सदैवदिवारात्रौवर्षप्रवेशेसति तनुतः लग्नमध्येचंद्रः शोध्यःलग्नयोगःसैकतान्चकार्यातद्रोगसहमंस्यात् दिवसेचंद्रमध्येलग्नस्वामीशोध्यःवामं

निशिलग्नस्वामिमध्येचंद्रः शोध्यःलग्नयोगः सैकताचकार्या तन्मन्मथोमदनस्तस्यसहमंस्यात् इंदुंतनुपलग्नस्वामीन्चंद्रश्चेत्तदाऽहोरात्रं अर्कोलग्न-
स्वामीन्चंद्रः शोध्यःलग्नयोगः सैकतान्चकार्यामन्मथसहमंस्यात् उदाहरणं भौममध्येबुधेशोधितेशेषं ०।२।१६।२८ लग्नयुतंसैकंजातं कर्मसहमं
१।२०।२०।२२ लग्नमध्येचंद्रेशोधितेशेषं ६।२५।५४।७ लग्नयुतंजातंरोगसहमं ७।१३।५८।१ चंद्रमध्येलग्नस्वामिनिभौमेशोधितेशेषं ९।
७।३७।११ लग्नयुतंजातंमदनसहमं ९।२५।४१।५ ॥१२॥ अथकलिसमाशास्त्रसहमानयनमाह कलिसमेइति दिवागुरुमध्येभौमः शोध्यः

कलिसमेस्तोगुरुतोविशुद्धेकुजेविलोमंनिशिपूर्वरीत्या शास्त्रंदिनेसौरिमपास्यजीवाद्व्यामंनिशिज्ञस्ययुतिःपुरावत् १३

विलोमंनिशिभौममध्येगुरुः शोध्यः पूर्वरीत्येतिलग्नयोगः सैकताचकार्या तत्कलिसहमंक्षमासहमंचभवति दिनेगुरुमध्येशनिः शोध्यः रात्रौ
शनिमध्येगुरुः शोध्यः ज्ञस्ययुतिः बुधयोगः कार्यः पुरावदितिशोध्यशुद्धाश्रयभांतरालेबुधोनचेत्तदासैकताचकार्यातच्छास्त्रसहमंस्या
त् उदाहरणं गुरुमध्येभौमेशोधितेशेषं ०।१५।२।३७ लग्नयुतंसैकंजातंकलिसहमं २।३।६।३१ क्षमासहमंच २।३।६।३१ गु
रुमध्येशनौशोधितेशेषं २।२२।४६।१९ बुधयुतंजातंशास्त्रसहमं ११।५।२।२७ ॥१३॥ छ छ छ छ

अथबंधुबंदकमृत्युसहमानयनमाह दिवानिशमिति दिवारात्रौवर्षप्रवेशेसतिबुधमध्येचंद्रः शोध्यःलग्नयोगःसैकताचकार्या तद्बंधुसहमंस्यात्
निशिवर्षप्रवेशश्चेद्बंदकसहमंस्यात् एतद्दिवावामंविपरीतंचंद्रमध्येबुधः शोध्यःलग्नयोगःसैकताचकार्यातदाबंदकंस्यात् दिवारात्रौवर्षप्रवे-
शेसति अष्टमस्मात् अष्टमभावमध्येचंद्रः शोध्यःशनिर्योज्यःउक्तवत्सैकताचकार्यामृतिसहमंस्यात् उदाहरणम् बुधमध्येचंद्रेशोधितेशेषम्
२।२०।६।२१ लग्नयुतंसैकंजातंबंधुसहमं ४।८।१०।१५ चंद्रमध्येबुधेशोधितेशेषं ९।९।५३।३९ लग्नयुतंजातंबंदकसहमं ९।२७।५७।३३

दिवानिशंज्ञाच्छशिनंविशोध्यबंध्वाख्यमेतन्निशिबंदकंस्यात् वामंदिवैतन्मृतिरष्टमस्माद्विंदुंविशोध्योक्तवदार्कियोगात् १४
देशांतराख्यंनवमाद्विशोध्यधर्मेश्वरंसंततमुक्तवत्स्यात् अहर्निशंवित्तपमर्थभावाद्विशोध्यपूर्वोक्तवदर्थसद्म १५

अष्टमभावमध्ये ७।१२।४५।१६ चंद्रेशोधितेशेषं १।२१।३५।२९ शनियुतंजातंमृत्युसहमं ७।२८।२४।२२ ॥ १४॥ अथदेशांतरार्थसह-
मयोरानयनमाह सततंदिवारात्रौवर्षप्रवेशेसति नवमान्नवमभावमध्यधर्मेश्वरंनवमभावस्वामिनंविशोध्यउक्तवल्लग्नयोगःसैकताचकार्या
तद्देशांतरसहमंस्यात् अहर्निशंदिवारात्रौवर्षप्रवेशेसति अर्थभावाद्धनभावाद्वित्तपंधनस्वामिनंविशोध्यपूर्वोक्तवल्लग्नयोगःसैकताचकार्याअ-
र्थसहमंस्यात् उदाहरणं नवमभावमध्ये ८।९।२६।३८ नवमभावस्वामिनंगुरुं ८।२९।३७।१३ विशोध्यशेषं ११।९।४९।२५ लग्नयुतंजातंदेशांतरसह-

सं ११।२७।५५।११ धनभावमध्ये १।१३।४५।१६ धनभावस्वामिनं शुक्रं विशोध्य शेषं ५।११।१३।२८ लग्नयुतं जातं द्रव्यसहमं ६।७।१७।२२ ॥१५॥ अथ परदारान्यकर्मवणिक्सहमानयनमाह सितादपास्यार्कमिति सदाहोरात्रं शुक्रमध्ये सूर्यः शोध्यः प्राग्वदिति लग्नयोगः सैकताच कार्या अन्यदाराह्वयं सहमं स्यात् अथ दिवसे चंद्रमध्ये शनिं विशोध्य वा निशायां शनिमध्ये चंद्रः शोध्यः लग्नयोगः सैकताच कार्या अन्यकर्मसहमं स्यात् शस्यदिवारात्रौ दिनवंदकसहममित्युक्तया रीत्या साध्यं तद्वणिक्सहमं स्यात् तद्यथा दिवारात्रौ वर्षप्रवेशे सति चंद्रमध्ये बुधः शोध्यः लग्नयोगः सैकताच

सितादपास्यार्कमथान्यदाराह्वयं सदा प्राग्वदथान्यकर्म चंद्राच्छनिं वा ममथो निशायां शस्यह्वणिज्यं दिनवंदकोक्त्या १६ शने
र्दिवार्कं निशि चंद्रमार्कं विशोध्य सूर्येंदुभनाथयोगात् स्यात्कार्यसिद्धिः सततं विशोध्य मंदं सितात्स्यात्तु विवाहसद्म १७

कार्या वणिक्सहमं स्यात् उदाहरणं शुक्रमध्ये सूर्ये शोधिते शेषं १०।१७।१।४२ लग्नयुतं जातं परस्त्रीसहमं ११।५।५।३६ चंद्रमध्ये शनौ शोधिते शेषं ११।१५।२०।५३ लग्नयुतं जातं अन्यकर्मसहमं ०।३।२४।४७ चंद्रमध्ये बुधे शोधिते शेषं ९।९।५३।३९ लग्नयुतं जातं वणिक्सहमं ९।२७।५३।३३ ॥१६॥ अथ कार्यसिद्धिविवाहसहमयोरानयनमाह शनेरिति दिवसे शनिमध्येऽर्कं विशोध्य सूर्यराशिस्वामी योज्यः रात्रौ शनिमध्ये चंद्रः शोध्यः चंद्रराशिस्वामी ग्रहो योज्यः सैकताच कार्या तत्कार्यसिद्धिसहमं स्यात् सततं दिवारात्रौ वर्षप्रवेशे सति शुक्रमध्ये शनिः शोध्यः सैकताच कार्या ताद्दि

वाहसहमंस्यात् उदाहरणम् शनिमध्येसूर्येशोधितेशेषं ८।२१।१८।४८ सूर्यराशिस्वामीशनिः तेनयुतंजातंकार्यसिद्धिसहमं ३।६।७।४२ शुक्रमध्येशनौशोधितेशेषं १।१७।४२।५४ लग्नयुतंसैकंजातंविवाहसहमं ३।५।४६।४८॥१७॥ अथप्रसवसंतापसहमयोरानयनमाह गुरोरिति दिवसेगुरुमध्येबुधः शोध्यः निशिवामंबुधमध्येगुरुः शोध्यः लग्नयोगः सैकताचकार्या तत्प्रसूतिसहमंस्यात् सदैवाद्दिवारात्रौशनिमध्येचंद्रः शोध्यः षष्ठंक्षिपेत् षष्ठभावोयोज्यः उक्तनिशासैकताकार्यातत्संतापसहमंस्यात् आरमपास्यशुक्रादित्यग्रिमश्लोकेनसंबंधः उदाहरणम् गुरुमध्येबुधेशोधितेशेषम् ०।१७।११।५

गुरोर्बुधंप्रोह्यभवेत्प्रसूतिर्वामंनिशींदुंशनितोविशोध्य षष्ठंक्षिपेदुक्तदिशासदैवसंतापसद्मारमपास्यशुक्रात् १८ श्रद्धास
दाप्रोक्तदिशाःथपुण्यंविद्याख्यतःप्रोह्यसदापुरास्त्या प्रीत्याख्यमुक्तंबलदेहसंज्ञंयशःसमंजाड्यमपास्यभौमात् १९

लग्नयुतंसैकंजातंप्रसूतिसहमं २।५।२२।५९ शनिमध्येचंद्रेशोधितेशेषं ०।१४।३१।७ रिपुभावेन ५।१३।४५।१६ युतंसैकंजातंसंतापसहमं ६।२८।२४।२३ ॥१८॥ अथश्रद्धाप्रीतिबलदेहसहमानयनमाह श्रद्धेति सदाहोरात्रंशुक्रमध्ये आरंभौमंविशोध्य प्रोक्तदिशालग्नयोगः सैकताचकार्या तच्छ्रद्धासहमंस्यात् सदादिवारात्रौविद्यासहममध्येपुण्यसहमंविशोध्यपुरोक्त्यालग्नयोगःसैकताचकार्यातत्प्रीतिसहमंस्यात् बलदेहसमयेयशःसहमंप्रागुक्तंयशःसहमंतत्तुल्यंबलदेहसंज्ञंसहमद्वयंजाड्यमपास्यभौमादित्यग्रिमश्लोकेनसंबंधः उदाहरणम् शुक्रमध्येभौमेशोधितेशेषं

११।१।१९।१२ लग्नयुतंजातंश्रद्धासहमं ११।२८।३।६ विद्यासहममध्येपुण्यसहमेशोधितेशेषं ८।०।४७।३८ लग्नयुतंजातंप्रीतिसहमं ८।१८।४४।३२ पूर्वोक्तंयशःस
हमंतदेवबलसहमं ०।१४।५५।३२ देहसहमंच ०।१४।५५।३२॥१९॥ अथजाड्यव्यापारपानीयपतनसहमानयनमाह शनिरिति दिवसेभौममध्येशनिः शोध्यः
चंद्रेबुधस्ययोगः।विलोमंनिशिशनिमध्येभौमः शोध्यः बुधेयोज्यःसैकताच्चकार्यंजाड्यसहमंस्यात् शम्चाद्दिवारात्रौभौममध्येबुधः शोध्यःलग्नयोगःसैक

शनिर्विलोमंनिशिचांद्रयोगाद्व्यापारआराज्ज्ञमपास्यशश्वत्
पानीयपातःशशिनंविशोध्यसौरेर्विलोमंनिशिपूर्ववत्स्यात् २०

ताच्चकार्या तद्व्यापारसहमंस्यात् दिवाशनिमध्येचंद्रः शोध्यः रात्रौचंद्रमध्येशनिः शोध्यः पूर्ववत्स्यादितिलग्नयोगः सैकतात्चकार्यातत्पानीयपात
सहमंस्यात् उदाहरणं भौममध्येशनौशोधितेशेषं २।७।४३।४२ बुधयुतंजातंजाड्यसहमं १०।१९।५९।५० भौममध्येबुधेशोधितेशेषं ०।२।१६।२८
लग्नयुतंसैकंजातंव्यापारसहमं १।२०।२०।२२ शनिमध्येचंद्रेशोधितेशेषं ०।१४।३९।७ लग्नयुतंसैकंजातंपानीयपातसहमं २।२।४३।१॥२०॥

अथशत्रुशौर्योपायसहमानयनमाह मंदमिति दिवसेभौममध्येशनिः शोध्यः रात्रौविलोमंशनिमध्येभौमः शोध्यः लग्नयोगःसैकताचकार्यातद्रिपु-
सहमंस्यात् दिवसेपुण्यसहममध्येभौमःशोध्यः रात्रौभौममध्येपुण्यसहमंशोध्यंपूर्ववत्स्यादितिलग्नयोगःसैकताचकार्याशौर्यसहमंभवति उपायइज्यं
शनितोविशोध्यइत्यग्रिमश्लोकेनसंबंधः उदाहरणम् भौममध्येशनौशोधितेशेषं०।७।४२।४३ लग्नयुतंसैकंजातंशत्रुसहमं ३।२५।४७।३६ पुण्यसहममध्ये
भौमेशोधितेशेषं०।१८।१०।५९ लग्नयुतंसैकंजातंशौर्यसहमं २।६।१४।५३ शनिमध्येगुरौशोधितेशेषं१।७।१३।४१ लग्नयुतंसैकंजातंउपायसहमं

मंदंकुजात्प्रोह्यरिपुर्विलोमंरात्रौभवेद्भौमविहीनपुण्यम् शौर्यंविलोमंनिशिपूर्ववत्स्यादुपायइज्यंशनितोविशोध्य २१
वामंनिशिज्ञंतुविशोध्यपुण्याज्ज्ञयुग्विलोमंनिशितद्दरिद्रम् सूर्योच्चतःसूर्यमपास्यनक्तंचंद्रंतदुच्चात्कुरुतापुरोत्त्या २२

१।२५।१७।३५॥२१॥ अथदरिद्रगुरुतासहमयोरानयनमाह वाममिति दिवसेशनिमध्येइज्योगुरुः शोध्यः रात्रौगुरुमध्येशनिः शोध्यः लग्न-
योगःसैकताचकार्यातदुपायसहमंस्यात् दिवसेपुण्यसहममध्येबुधःशोध्यःबुधयोगःकार्यः रात्रौबुधमध्येपुण्यसहमंशोध्यंबुधयुक्तंकार्यंसै-
कताचकार्यातद्दारिद्र्यसहमंस्यात् दिवसेसूर्योच्चमध्ये०।१०सूर्यःशोध्यःनक्तंरात्रौचंद्रोच्चमध्ये १।३ चंद्रःशोध्यःपुरोत्त्यालग्नयोगःसैकताच-
कार्यातद्गुरुतासहमंस्यात् उदाहरणं पुण्यसहममध्येबुधेशोधितेशेषं०।२०।२७।२७बुधयुतंजातंदारिद्र्यसहमं१।२।४३।३५सूर्योच्चमध्ये०।१०सू-

येशोधिते शेषं ०।२।२९।५४ लग्नयुतं सैकं जातं गुरुतासहमं ३।२०।३३।४८ ॥२२॥ अथ जलपथबंधनसहमयोरानयनमाह कर्काद्धेत इति दिवा कर्काद्धतः सार्द्धराशित्रयमध्ये ३।१५ शनिं विशोध्य अन्यथा निशि रात्रौ शनिमध्ये सार्द्धराशित्रयं ३।१५ विशोध्यं लग्नयोगः सैकतां च कार्यं जलाध्वा जलपथसहमं स्यात् अह्नि दिवसे पुण्यसहममध्ये शनिः शोध्यः रात्रौ शनिमध्ये पुण्यसहमं शोध्यं लग्नयोगः सैकतां च कार्यं तद्बंधनसहमं स्यात् उदाहरणं सार्द्धराशित्रयमध्ये ३।१५ शनौ शोधिते शेषं ९।८।११।६ लग्नयुतं सैकं जातं जलपथसहमं ९।२६।१५।० पुण्यसहममध्ये शनौ शोधिते शेषं २।२५।५४।४१ ल

कर्काद्धेतः ३।१५ प्रोह्य शनिं स्याज्जलाध्वान्यथा निशि पुण्याच्छनिं विशोध्याह्नि वामं निशि तु बंधनम् २३ चंद्रः सितादपास्योक्तं सदा कन्याख्यमुक्तवत् पुण्यादर्कमपास्याययोगादश्वोऽन्यथा निशि २४

ग्नयुतं सैकं जातं बंधनसहमं ४।१३।५८।३५॥२३॥ अथ कन्याश्वसहमयोरानयनमाह चंद्र इति सदा दिवा रात्रौ शुक्रमध्ये चंद्रः शोध्यः उक्तवदिति लग्नयोगः सैकतां च कार्यं तत्कन्यासहमं स्यात् दिवसे पुण्यसहममध्ये सूर्यः शोध्यः रात्रौ सूर्यमध्ये पुण्यसहमं शोध्यं आयभाव एकादशभावो योज्यः सैकतां च कार्यं तदश्वसहमं स्यात् उदाहरणं शुक्रमध्ये चंद्रे शोधिते शेषं २।२।२२।१ लग्नयुतं सैकं जातं कन्यासहमं ३।२०।२५।५५ पुण्यसहममध्ये सूर्ये शोधिते शेषं ११।२५।१३।२१ एकादशभावेन १०।९।२६।३८ युतं सैकं जातं अश्वसहमं ११।४।४७।७ अस्मिन् सहमद्वये समतिर्नास्ति समरसिंहेनानुक्तत्वात् अस्मिन् संज्ञातं त्रैशोध्यशोधकयोर्मध्ये लग्नं चेन्न भवति तदा स

हमे एकोराशिर्योज्यः इत्युक्तमस्तितर्हि अत्रार्थेसंमतिवाक्यंकुत्रापिनलभ्यते यवनानांमतेपिसैकतानास्ति समरसिंहेलग्नाद्द्वितीयभवनादित्यपिपाठ
स्तिष्ठति अस्मिन्पाठेसैकतासमायाति अत्रग्रंथकर्त्रालग्नाद्द्वितीयभवनादितिपाठंधृत्वासहमेषुसैकतोक्ता परंतुसमरसिंहे तथायवनताजिके तथामनु
ष्यताजिकेलग्नाद्द्वितीयभवनादित्येवपाठोस्ति अस्मिन्पाठेसैकतानास्ति एवंपुरस्कृत्यसर्वैरन्यार्यैःसहमेषुसैकतानोक्ता अत्रोदाहरणं यदाहसमरसिं
हः दिवसेदिनपतिभोग्याच्छशिभुक्तांशकान्संमील्य अंतःस्थितराशियुतांस्त्रिंशत्प्रत्येकतःकृत्वा १ यद्यंतरराश्यंतर्नभवति लग्नंतदाऽस्यभुक्तां-
शाः मध्येक्षेप्याः मध्यस्थितेतुभोग्यांशकाः पात्याः लग्नाद्द्वितीयभवनात्त्रिंशत्प्रत्येकतः शोधितेयत्रविश्राम्यति तत्रर्क्षेविज्ञेयंपुण्यसहममिति
दिवसेवर्षप्रवेशेसति सूर्यस्यराशिंत्यक्त्वा अंशादिकंस्थाप्यं अंशास्त्रिंशदंशमध्येशोध्याः कलादिकंषष्टिमध्येशोध्यं अंशादिकं यदवशि
ष्टं तद्भोग्यंतन्मध्येचंद्रराशिंत्यक्त्वा अंशादिकंयोज्यं तदनंतरंसूर्याधिष्ठितराशेःसकाशादग्रिमोयोराशिस्तस्माद्गणनयायत्संख्याकश्चंद्रा-
धिष्ठितराशेःसकाशात्पूर्वराशिर्भवति तावत्यःसंख्याःपूर्वानीतांशोपरिस्थाप्याः तदनंतरंप्रत्येकतःकृत्वात्रिंशत्प्रत्येकंप्रत्येकमितित्रिंशत्प्रत्येकतः
राशीनामंशाःकार्याः अधःस्थांशयुताःतदनंतरंसूर्यराशेःसकाशाच्चंद्रराशिर्यावदनयोर्मध्येलग्नराशिश्चेन्नभवति तदालग्नस्यराशिंत्यक्त्वाऽशायो
ज्याः अनयोर्मध्येलग्नराशिश्चेत्भवति तदालग्नस्यभोग्यांशाःशोध्याःतदनंतरंयदास्यभुक्तांशायुक्तास्तदालग्नाद्गणनाक्रमः यदालग्नस्यभो-
ग्यांशाःशोधिताःतदाधनभावाद्गणनाक्रमः अनयारीत्यागणनायांप्रतिराशौत्रिंशत्त्रिंशच्छोधितेयस्मिन्राशौत्रिंशन्नशुध्यतितस्मिन्राशौपुण्य-

| पुण्य | गुरु | विद्या | यश | मित्र | महा | आज्ञा | सामर्थ्य | ज्ञाता | गौरव | राज | तात | माता | सुत | जीव | अंबु | कर्म | रोग | मद | कलि | क्षमा | शास्त्र | बंधु | बंदक | मृत्यु |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ | १७ | १८ | १९ | २० | २१ | २२ | २३ | २४ | २५ |
| ९ | ५ | ५ | ० | ४ | २ | ११ | २ | ४ | १ | ९ | ९ | १० | ४ | ९ | १० | १ | ७ | ९ | २ | २ | ११ | ४ | ९ | ७ |
| २ | ३ | ३ | १४ | २५ | ६ | ० | ३ | १० | १४ | १७ | १७ | १५ | २५ | २५ | १५ | २० | १३ | २५ | ३ | ३ | ५ | ८ | २७ | २८ |
| ४३ | २४ | २४ | ५५ | १२ | १४ | २१ | ६ | ५० | ५५ | २२ | २२ | ४१ | २९ | १७ | ४१ | २० | ५८ | ४९ | ६ | ६ | २ | १० | ५७ | २४ |
| ३५ | १३ | १३ | ३२ | २६ | ४३ | ० | ३१ | १३ | ३२ | ४२ | ४२ | ५३ | २० | ३५ | ५३ | २२ | १ | ५ | ३१ | ३१ | २७ | १५ | ३३ | २२ |
| देशांतर | धन | अन्य | अक | वणिक् | का० | विवाह | प्रसूति | संतान | श्रद्धा | प्रीति | बल | देह | जाड्य | व्यापार | पानीय | शत्रु | शौर्य | उपाय | दरिद्र | गुरुता | जल | बंध | कन्या | अश्व |
| २६ | २७ | २८ | २९ | ३० | ३१ | ३२ | ३३ | ३४ | ३५ | ३६ | ३७ | ३८ | ३९ | ४० | ४१ | ४२ | ४३ | ४४ | ४५ | ४६ | ४७ | ४८ | ४९ | ५० |
| ११ | ६ | ११ | ० | ९ | ३ | ३ | २ | ६ | ११ | ८ | ० | ० | १० | १ | २ | ३ | २ | ९ | ९ | ३ | ९ | ४ | ३ | ११ |
| २७ | ७ | ५ | ३ | २७ | ६ | ५ | ५ | २८ | २८ | १८ | १४ | १४ | १९ | २० | २ | २५ | ६ | २५ | २ | २० | २६ | १३ | २० | ४ |
| ५५ | १७ | ५ | २४ | १७ | ७ | ४६ | २२ | २४ | ३ | ४४ | ५५ | ५५ | ५९ | २० | ४३ | ४७ | १४ | १७ | ४३ | ३३ | १५ | ५८ | २५ | ४० |
| १९ | २२ | ३६ | ४७ | ३३ | ४२ | ४८ | ५९ | २३ | ६ | ३२ | ३२ | ३२ | ५० | २२ | १ | ३६ | ५३ | ३५ | ३५ | ४८ | ० | ३५ | ५५ | ७ |

सहमंज्ञेयम् लग्नद्वितीयभवनादितिपाठेसूर्यचंद्रयो
र्मध्येलग्नंनभवति अथवाभवतितदाधनभवनाद्वेग
णनाक्रमःनतुलग्नात् उदाहरणं सूर्यः०।७।३०।६चंद्रः
५।२२।०।४७लग्नं०।१८।३।५४ सूर्यस्यभोग्यांशामध्ये
२२।२९।५४ चंद्रस्यभुक्तांशाः२२।०।४७युक्ताःजाताः
४४।३०।४१सूर्यचंद्रयोरंतरालराशिभिर्युक्ताःजातोय
मकोराश्यादिः३।१४।३०।४१अस्यांशाः१०४।३०।४१ सू
र्यचंद्रयोर्मध्येलग्नंनास्ति इतिकारणाल्लग्नस्यभुक्तां
शैः१८।३।५४ युक्ताजाताः१।३२।४३।३५लग्नात्त्रिं
शत्संख्येकृतः शोधितेजातंसिंहराशौपुण्यसहमं
४।२।४२।३५ धनभवनात्त्रिंशत्संख्येकृतः शो-

धितेजातंकन्याराशौपुण्यसहमं ५।२।४२।३५ अनयारीत्यासैकतासमायाति एवंपाठयोर्विवादः लग्नाद्वितीयभवनादितिपाठएतावतीयुक्तिर स्ति यदालग्नस्यभुक्तांशाः भुक्तास्तदालग्नस्यभोग्यमवशिष्टइतिकारणाल्लग्नाद्गणनाक्रमः तत्रलग्नसंबंधस्तिष्ठति यदालग्नस्यभोग्यांशाः शोधितास्तदालग्नसंबंधोनास्ति इतिकारणाद्धनभवनाद्गणनाक्रमः अत्रलग्नशेषंकिमपिनास्ति एतावतीयुक्तिरस्ति सर्वग्रंथेषुसंमतिर स्ति संमतेरभावाल्लग्नाद्वितीयभवनादित्यपिपाठः तथाचोक्तंमनुष्यजातके भोग्यादुत्क्रममूर्नियावदरिविलान्यंतभेयुक्तान्यतोलग्नेबाह्यगतेऽस्य

स्वोच्चादिसत्पदगतोयदिलग्नदर्शीवीर्यान्वितःसहमपोयदिनेक्षतेऽगं नासौबलीरविशशिश्रितभेशदर्शपूर्णांतिलग्नपबलस्यवि चारणेत्थम् २५

भुक्तसहितंभोग्योनमंतःस्थिते कृत्वाराशिमपाशितेरवदहनैर्लग्नाद्वितीयाच्चतत्पुण्याद्यानिभवंति तत्रसहमान्यंशेविरा मोयतः २४ अथसहमानांफलानिव्याख्यायंते स्वोच्चादीति सहमपः सहमराशिस्वामीस्वोच्चादिस्वोच्चस्वगृहस्वहद्दास्वत्रैराशिकस्वमुसल्लहएत त्स्थानस्थःसन् अथवासत्पदगतः शुभस्थानस्थःसन् यदिलग्नदर्शीलग्नंपश्यति तदावीर्यान्वितः शौर्येणबलेनान्वितोयुक्तः बलीत्यर्थः सह मस्वामीस्वोच्चादिसत्पदगतःसन्यदि अंगंलग्नंनेक्षते नपश्यति तदाअसौबलीनभवति निर्बलइत्यर्थः रविशशीति रविशशिभ्यामाश्रिते भेराशीतयोः राश्योः ईशौस्वामिनौ तद्यथा जन्मकालेसूर्योयस्मिन् राशावस्तितद्राशिस्वामीतथाजन्मकालेचंद्रोयस्मिन् राशावस्ति त

द्राशिस्वामीजन्मकालादतीतागतामावास्यायावत् घटीपरिमिताऽस्तितस्मिकालेतात्कालिकसूर्यात् लग्नंसाध्यंतत्स्वामीतया जन्मकालातीतपू-
र्णांतलग्नस्वामी एतेषांचतुर्णांबलस्यैवंविचारः हिल्लाजे आयुर्दायानयनेतथामनुष्यजातके आयुर्दायानयने एतेषांबलविचारस्योपयोगः प्र
कृतेप्रयोजनाभावेपिप्रसंगादुक्तम् २५ अथनिर्बलसबलत्वलक्षणमाह पंचवर्गीति पंचवर्गीबलंप्रागुक्तंतेनऊनः शरोनोहीनबल-

पंचवर्गीबलेनोनोनहर्षस्थानमाश्रितः अबलोऽयंलग्नादर्शीबलीस्वल्पेऽस्तिचेत्पदे २६

इत्यर्थः नंदत्रिषडित्यादिचत्वारिहर्षस्थानानि प्रागुक्तानितन्मध्येएकमपिहर्षस्थानं नाश्रितः तथालग्नंअदर्शीलग्नमपिचेन्नपश्यति तदा
अयंग्रहः अबलःनिर्बलोज्ञेयः चेत्स्वल्पेपदेऽस्तितदाबली तद्यथा स्वगृहस्वोच्चस्थानेग्रहेसति महाधिकारः स्वहद्दायांग्रहेसति मध्यमोऽ
धिकारः स्वत्रैराशिकेस्वमुसल्लहेग्रहेसति स्वल्पोऽधिकारः अतएवप्राज्ञैर्बलतारतम्यमुक्तं त्रिंशत्स्वभेविंशतिरात्मतुंगेइत्यादिपदंस्था-
नं एवंस्वल्पेपिपदेत्रैराशिकमुसल्लहाख्येस्थानेस्थितः सन्लग्नंपश्यति तदाबलीग्रहोज्ञेयः २६ ७ ७ ७

एवंसहमाधिपस्यबलाबलंज्ञात्वेदानींसहमस्यवृद्धिह्रासावाह स्वस्वामिनेति यत्सहमंस्वस्वामिनासहितंदृष्टंवा अथवाशुभग्रहैः सहितंदृष्टंवा
भवति यदिप्रागुक्तप्रकारेणसहमस्वामीबलीस्यात् तदातत्सहमस्यवृद्धिः फलदातृत्वेसामर्थ्यंसहमस्यफलंकदाभविष्यतीतिग्रंथकर्त्रानोक्तं
तच्चोक्तं गणकचक्रचूडामणिभिः श्रीकेशवदैवज्ञैः अब्देशेनयुतंभपेनसहमंवास्वेशदृष्ट्यान्वितंसद्भिर्वासहमाधिपस्यकिसिमेतत्स्वीयलाभप्रदमि
ति किसिमेदशायांसहमस्वामिदशायांफलंभवतीतिज्ञेयम् यत्सहमंचेत्स्वामिना अथवाशुभग्रहैर्नयुक्तंनदृष्टंतदातत्सहमस्यनसंभवः फलदा

स्वस्वामिनाशुभखगैःसहितंनदृष्टंस्वामीबलीन्वयदिचेत्सहमस्यवृद्धिः चेत्स्वामिनाशुभखगैश्चनयुक्तदृष्टंतत्संभवोनहिभवे
दितिचिंत्यमादौ २७ अष्टमाधिपतिनायुतेक्षितंपापदृग्युतमथेत्थशालितैः संभवेपिविलयंप्रयातितत्तेनजन्मनिपुरेदमीक्ष्यता
म् २८

तृत्वसामर्थ्यंनभवेत् नामसदृशंफलंनददातीत्यर्थः इत्यादौप्रथमतश्चिंत्यंविचार्यम् २७ अथान्यत्सहमासंभवलक्षणमाह अष्ट
मेति तत्सहमवर्षलग्नादष्टमाधिपतिना अष्टमराशिस्वामिनायुतं ईक्षितंदृष्टंवा अथवापापग्रहेणदृष्टंयुतंवा अथवातैरष्टमराशिस्वामिना
पापग्रहैर्वा इत्थशालीमुथशिलंकरोति तदास्वस्वामिनाशुभखगैःसहितमित्यादिसहमस्यफलप्राप्तिसंभवेऽपिविलयंनाशंयाति सहमंनाम
सदृशंफलंनददातीत्यर्थः तेनकारणेनजन्मनिजन्मकालेप्रथमतः इदंसहमस्यबलाबलमीक्ष्यतांविचार्यम् २८ ७ ७

अथबलिष्ठसहमस्यसाधनंनिर्बलस्यनिराकरणमित्यतआह आदाविति आदौप्रथमतःजन्मनिजन्मकालेसर्वेषांपंचाशत्सहमानांबलाबलंविमृश्य ज्ञात्वायेषांफलप्राप्तिसंभवस्तानिवर्षेविचिंतयेत् येषांतुसहमस्वामिनांसर्वप्रकारेणनैर्बल्यंज्ञातंतानिवर्षेकदापिनविचारयेदित्यर्थः २९ एवमुक्त-प्रकारेणसहमानांसबलत्वेसतिफलदातृत्वमुक्तं इदानींसमस्तसहमानांफलानिउच्यंते तत्रादौपुण्यसहमस्यफलमाह सबलेइति सबले

आदौजन्मनिसर्वेषांसहमानांबलाबलम् विमृश्यसंभवोयेषांतानिवर्षेविचिंतयेत् २९ सबलेपुण्यसहमेधर्मसिद्धिर्धनागमः शुभस्वामीक्षितयुतेव्यत्ययेव्यत्ययंविदुः ३० लग्नात्षष्ठाष्टरिःफस्थेधर्मभाग्ययशोहरम् शुभस्वामिदृशाप्रांतेसुखधर्मादिसंभवः ३१

पुण्यसहमेसति शुभग्रहैःस्वामिनाचदृष्टयुतेसति धर्मस्यसिद्धिर्धनागमः धनप्राप्तिः व्यत्ययेसहमस्यनिर्बलत्वेसति पापग्रहस्यदृष्टयुतेसति व्यत्ययंधर्मनाशः धननाशश्चेतिफलंविदुःवदंति ३० अथास्याशुभफलमाह लग्नादिति वर्षलग्नात्षष्ठाष्टमद्वादशस्थानस्थंपुण्यसहमंयदाभवति तदासंपूर्णवर्षपर्यंतंधर्मभाग्ययशसांनाशकंएतत्स्थानस्थितंसत् शुभग्रहेणस्वामिनावादृष्टंतदाप्रांतेवर्षांतेसुखधर्मादिसंभवःप्राप्तिःस्यात् अर्थाद्वर्षपूर्वार्द्धेअशुभफलम् ३१ ७ ७ ७

अथपापशुभग्रहसंबंधेनयुतिदृष्ट्योः फलमाह पापयुगिति तत्पुण्यसहमं पापयुक्तं शुभदृष्टंचचेद्भवति तदाप्राक् पूर्वार्द्धे अशुभं भवेत् वर्षस्योत्तरार्द्धे शुभंस्यात् यदातुपुण्यसहमं शुभयुक्तं पापदृष्टंचतदादौ वर्षपूर्वार्द्धे शुभंस्यात् परे वर्षस्योत्तरार्द्धे असत् अशुभंस्यात् यदातुपापयुक्तं पापदृष्टंचेत्तदासंपूर्णवर्षमशुभं भवेत् यदातुशुभग्रहयुक्तं शुभग्रहदृष्टंचेत्तदासंपूर्णवर्षपर्यंतंशुभफलं भवतीत्यर्थतः सिद्धम् ३२ अथपुण्यसहमप्रशंसामाह यत्राब्दइति यत्राब्दे यस्मिन् वर्षे पुण्यसहमं शुभं शुभफलजनकं सोऽब्दः शुभावहः तद्वर्षं शुभफलदं ज्ञेयमित्यर्थः यस्मिन् वर्षे पुण्यसहमे-

पापयुक्शुभदृष्टंचेदशुभं प्राक्ततः शुभम् शुभयुक्पापदृष्टं मादौशुभमसत्परे ३२ यत्राब्दे पुण्यसहमं शुभं सोऽब्दः शुभावहः अनिष्टेऽस्मिन्न शुभोनेति पुण्यमादौ विचारयेत् ३३ सूतौ षष्ठाष्टरिःफस्थं मध्ये पापहतं पुनः पुण्यंधर्मार्थसौख्यघ्नं पत्यौ दग्धे फलंतथा ३४

अनिष्टे सति तदा शुभोनेति शुभफलं वर्षमध्ये न ददातीत्यर्थः अशुभमेव ददातीत्यतः कारणात् पुण्यसहममादौ-प्रथमतः विचारयेत् ३३ अथपुण्यसहमस्य जन्मलग्ने त्वनिष्टस्थानस्थितस्याशुभफलमाह सूताविति सूतौ जन्मसमयलग्ने षष्ठाष्टरिःफस्थं रिःफशब्देन द्वादशस्थानं एतत्स्थानस्थितं चेत्पुण्यं पुण्यसहमं भवति अब्दे वर्षे पुनः पापहतं पापयुतं दृष्टं वा तदा धर्मार्थसौख्यानां घातकं भवति पत्यौ पुण्यसहमस्वामिनि दग्धे ऽस्तंगते तथा फलं धर्मार्थसौख्यानां घातकं भवति ३४

अखिलान्निसमग्राणिसहमानि इत्थममुनाप्रकारेण सूतोजन्मलग्नेवर्षेचचिंतयेत् मांद्यंरोगः अरिः शत्रुः कलिः सकटकः मृत्युः प्रसिद्धः अशु-
भत्वाद्दारिद्र्यसहममपि अतएवग्रंथकर्ताअग्रेफलंवक्ष्यति दारिद्र्यमृतिमांद्यारिकलिषूक्तोविपर्ययइति एषुसहमेषुव्यत्ययात्पुण्यसहम फ-
लाद्विपरीतंफलमादिशेत् तद्यथा पुण्यसहमवत्स्वोच्चादिसत् पदगतोयदिलग्नदर्शीत्येतच्छ्लोकमारभ्यसूतोपष्ठाष्टरिःफस्थमित्येतावत्पर्यं-

सहमान्यखिलानीत्थंसूतौवर्षेविचिंतयेत् मांद्यारिकलिमृत्यूनांव्यत्ययादादिशेत्फ
लम् ३५ कार्यसिद्धिसहमंयुतंशुभैर्दृष्टमूथशिलगंजयप्रदम् संगरेऽथशुभपापदृ
ग्युक्कुशतोजयउदीरितोबुधैः ३६

तंविचारेक्रियमाणेयदिमांद्यारिकलिमृत्यूनांसहमानांशुभफलमागतंतत-
दाअशुभफलंवाच्यम् यदित्वशुभफलमागतंतदाशुभफलंवाच्यमित्यर्थः ३५ अथकार्यसिद्धिसहमस्यशुभाशुभफलमाह कार्यसिद्धीति कार्यसि
द्धिसहमंशुभैः शुभग्रहैर्युतंदृष्टंमूथशिलगंवाहस्वन्मुथशिलगंचदृष्टंमूथशिलगंतथाशुभग्रहैर्मुथशिलश्चेत्कृतस्तदासंगरेसंग्रामेजयप्रदंशत्रुनाशः
स्वोत्कर्षश्चभवतीत्यर्थः अथेत्यनंतरंतत्कार्यसिद्धिसहमंशुभपापग्रहदृष्टयुक्तंवातदाकुशतोबुधैःपंडितैर्जयउदीरितःकथितः ३६ ७

अथकलिसहमस्यशुभाशुभफलमाह   कलीति कलिः सकटकस्तस्यसहमंमिश्रखगैः शुभपापग्रहैर्दृष्टंसंयुतंवानभवति तथा यदिपापमुथशि
लगंपापग्रहकृतमुथशिलयोगश्चेद्भवति तदाकलेः कलहप्रसंगान्मृतिंमरणंप्राप्नोति अथेत्यनंतरंतत्रकलिसहमेसौम्यैः शुभग्रहैःसहितेयुक्तेऽ
वलोकितेदृष्टेवासति कलौकलहेजयमतिस्वोत्कर्षंप्राप्नोति यदिमिश्रदृशितः शुभपापग्रहदृष्टिश्चेद्भवति तदाकलिव्ययेकलिश्चव्ययश्चकलि-
व्ययेकलिः कलहः व्ययःदुःखंचतेभवतः ३७ अथविवाहसहमस्यशुभाशुभफलमाह विवाहेति विवाहसहमं अधिपेनस्वामिनायुतंदृष्टंवात-

कलिसद्ममिश्रखगदृष्टसंयुतंयदिपापमूथशिलगंकलेर्मृतिम्  अथतत्रसौम्यसहितावलोकितेजयमेतिमिश्रदृशितःक
लिव्यये ३७ विवाहसद्माधिपसौम्यदृष्टयुतंशुभैर्मूथशिलंशुभाप्तिम् कुर्याद्यदामिश्रसमेतदृष्टंकष्टादथक्रूरमृतीश्वरैर्न ३८

थाऽन्यैर्वासौम्यैः शुभग्रहैर्दृष्टंयुक्तंवास्यात्तथाशुभैर्मुथशिलंशुभैः शुभग्रहकृतमुथशिलयोगश्चेत्तदाशुभाप्तिंविवाहप्राप्तिंकुर्यात् यदामिश्रसमेतं
दृष्टंमिश्रैःशुभाशुभग्रहैः युक्तंदृष्टंवाचेत्तदाकष्टात्क्लेशेनविवाहप्राप्तिंकुर्यात् अथक्रूरैःपापैर्विवाहसहमंयुतंदृष्टंवामुथशिलीकृतंवा तथामृतीश्व
रेणवर्षलग्नाद्विवाहसहमाद्वा अष्टमस्थानाधीश्वरेणयुतंदृष्टंवामुथशिलीकृतंवास्यात्तदातस्मिन्वर्षेविवाहोनैवभवेत् ३८

अथयशःसहमस्याशुभफलमाह यशइति यशोधिपेयशःसहमस्वामिनिनैधनगेऽष्टमस्थानगतेखलेनपापग्रहेणयुतेदृष्टेवासतिसद्यशसोविनाशःस्यात् किंतु पापसंबंधेनार्जितस्यायशसोऽस्तिलाभः तादृशेऽष्टमस्थितेसतिपुनर्नष्टौजसि अस्तंगतेसतिकुलकीर्तिनाशःस्यात् ३९ अथ पुनरपियशःसहमस्यशुभाशुभफलमाह शुभेइति यशःसहमपतिनासहशुभेत्थशालेशुभग्रहेणसाकंमुथशिलयोगेसतिशुभदृक्युतेवासतिबलान्वितेबलिष्ठेसतियशसोऽभिवृद्धिःस्यात् तथायुद्धेजयःस्यात् तथावाहनानांगजाश्वादीनांशस्त्राणांचलाभःस्यात् तथायशःसहमप

यशोधिपेनैधनगेखलेनयुतेक्षितेसद्यशसोविनाशः पापार्जितस्यायशसोऽस्तिलाभोनष्टौजसिस्यात्कुलकीर्तिनाशः ३९
शुभेत्थशालेशुभदृग्युतेवाबलान्वितेस्याद्यशसोऽभिवृद्धिः युद्धेजयोवाहनशस्त्रलाभःपापेसराफाद्यशोर्थनाशः ४०
आशातदीशश्चषडष्टरिःफविवर्जितःसौम्ययुतेक्षितश्च स्याद्वाञ्छितार्थोवरवाहनादिलाभःखलेक्षायुतितोऽतिदुःखम् ४१

तेःपापग्रहेणसहईसराफयोगेसतिअयशोर्थनाशश्चस्यात् ४० अथाशासहमस्यशुभाशुभफलमाह आशासहमंलग्नात् षष्ठाष्टमरिःफवर्जितंएतत्स्थानस्थितंभवति तथातदीशश्चआशासहमाधिपतिश्चएतत्स्थानविवर्जितोभवति इयमपिसौम्यैःशुभग्रहैर्युतंईक्षितंदृष्टंवातदावाञ्छितानामर्थानांसुवर्णादिद्रव्याणांअंबराणांवस्त्राणाम् वाहनादीनांचलाभःस्यात् खलेनपापग्रहेणदृष्टेयुतेसतितदावाञ्छितार्थादीनामपिदुःखम् ४१

अथरोगसहमस्याशुभफलमाह मांद्याधिपइति मांद्याधिपः रोगसहमाधीशः स्वयंपापग्रहः पापयुतेक्षितश्च पापग्रहैर्युतः दृष्टः तदासरोगकरो-
विचिंत्योज्ञेयः चेन्मृतिपेनलग्नादष्टमस्थानाधिपतिनासहरोगसहमाधीशइत्थशालोमुथशिलंकरोति तदामृत्युमरणंस्यात् यदितुतादृशेमांद्यस
हमस्वामिनिहीनबलेसति अतिकष्टान्मरणंभवेत् ४२ अथपुनरपिमांद्यसहमस्यशुभाशुभफलमाह स्वस्वामीति मांद्येमांद्यसहमेस्वस्वामिना
सौम्यग्रहैर्वायदीक्षणंतद्भजतितादृशेसति तथानाथेसवीर्येसति मांद्याधिपः उक्तरीत्यासबलेसति अष्टषडंत्यवर्जेषडष्टद्वादशस्थानस्थितिरहिते

मांद्याधिपः पापयुतेक्षितश्चपापः स्वयंरोगकरोविचिंत्यः चेदित्थशालोमृतिपेनमृत्युस्तदाभवेद्धीनबलेतिकष्टात् ४२ स्वस्वा
मिसौम्येक्षणभाजिमांद्येनाथेसवीर्येऽष्टषडंत्यवर्जे रोगस्तदानैवभवेद्धिमिश्रयुतेक्षितेरुग्भयमस्तिकिंचित् ४३ अर्था
त्त्यशुभनाथदृष्टसहितद्रव्यागमात्सौख्यदंपापैर्दृष्टयुतंचवित्तविलयंकुर्यादथोपापयुक्

सति तदारोगोनैवभवति यदाशुभपापैर्युतेक्षितेदृष्टेवासति किंचिद्रुग्भयंरोगभयमस्तीतिज्ञेयम् ४३ अथार्थसहमस्यशुभाशुभफलमाह अ
र्थास्त्यमिति अर्थार्ख्यंसहमंशुभैर्नाथेनस्वामिनादृष्टयुतंचेद्भवति तदाद्रव्यागमात् द्रव्यप्राप्त्याकृत्वासौख्यदंयदापापग्रहैर्दृष्टंयुतंनाथेनतदावित्त
स्यद्रव्यस्यनाशंकुर्यात् अथार्थसहमंपापयुक्तसदृष्टंचसद्भिः शुभग्रहैर्दृष्टंचभवति तथाशुभेत्थशालिशुभग्रहेणसहमुथशिलयोगंकरोति

तदासर्वंधनंसर्वसंचितंधनंनाशयेत् पश्चादर्थस्यद्रव्यस्यसमुद्भवंससुखंसुखसहितंकुर्यात् व्यत्यासतोव्यत्ययइति अर्थसहमंशुभाशुभैर्दृष्टंतथा
तैरेवयुथशिलयोगंयदिकरोतितदाशुभफलमेवस्यात् ४४ अथशत्रुमित्रदृष्ट्योःफलमाह रिपुदृष्ट्येति यत्सहमंशुभग्रहेणपापग्रहेणवारिपुदृष्ट्याश
त्रुदृष्ट्यायदापश्यति तदारिपोःशत्रोःसकाशाद्भीतिर्भयंहरेत् तस्करादर्थनक्षयः चौर्येणद्रव्यंगच्छतीत्यर्थः यत्सहमंशुभेनपापेनवामित्रदृष्ट्याप-

सहमंचशुभंत्थशालियदितत्पूर्वंधनंनाशयेत्पश्चादर्थसमुद्भवंचससुखंव्यत्यासतोव्यत्ययः ४४ रिपुदृष्ट्यारिपोर्भीतिस्त
स्करादर्थनक्षयः मित्रदृष्ट्यामित्रयोगात्धनमानोयशःसुखम् ४५ सत्स्वामिदृष्टंयुतमात्मजस्यलाभंसुखंयच्छतिपुत्र
सद्म पापान्वितंसौख्यखगेत्थशालीप्राग्दुःखदंपुत्रसुखायपश्चात् ४६

श्यति तदामित्रयोगाद्धनंमानोयशःसुखंप्राप्नोति ४५ अथपुत्रसहमस्यशुभाशुभफलमाह सत्स्वामिदृष्टमिति पुत्रसद्मपुत्रसहमंसच्छु
भग्रहैःचस्वामिनाचदृष्टंयुतंवा तदाआत्मजस्यपुत्रस्यलाभंपुत्रोत्पत्तितज्जनितसुखंयच्छति यदिपुत्रसहमंपापान्वितंपापग्रहयुक्तंसौम्य
ग्रहैः सहेत्थशालंकरोति तदाप्राक्प्रथमतः पुत्रसंबंधिदुःखंपश्चात्सुखायपुत्रसौख्यंभवति ४६ ७ ७

अथपुनःकृतसहमस्यशुभाशुभफलमाह पापान्वितमिति यदिपुत्रसहमंपापग्रहैर्युक्तंपापग्रहकृतेसराफयोगंईशेपुत्रसहमाधीशेगतेजसिनिर्बले अस्तंगतेवासतितदापुत्रस्यनाशः अब्देवर्षप्रवेशसमयेपुत्रसहमाधीश्वरःसूतौजन्मकालेसुतेशःपंचमभावाधीश्वरोभवतिपुनःशुभग्रहैर्मित्रेणचेत्दृष्टोभवतितदापुत्रस्यलब्ध्यैप्राप्त्यैभवति ४७अथपितृसहमस्यशुभाशुभफलमाह पित्र्यमिति पित्र्यंपितृसहमंसच्छु

पापान्वितंपापकृतेसराफनाशायपुत्रस्यगतौजसीशे सूतौसुतेशःसहमेश्वरोऽब्दे पुत्रस्य
लब्ध्यैशुभमित्रदृष्टः ४७ पित्र्यंसदीक्षितयुतंपतियुक्तदृष्टंतातस्ययच्छतिधनांबरमान
सौख्यम् पत्यौगतौजसिमृतौखलमूसराफनाशःपितुश्चरगृहेपरदेशयानात् ४८

भग्रहैरीक्षितंदृष्टंयुतंवा अथवापतिनास्वामिनायुक्तंदृष्टंवासत्तातस्यपितुर्धनांबरंमानसौख्यंयच्छति पत्यौपितृसहमस्वामिनिगतौजसिनिर्बलेअस्तंगतेवामृतौलग्नादष्टमस्थानस्थितेसतिखलेनकृतमूसराफयोगेचसति तत्रापिचरगृहेचरराशिस्थेमेषकर्कतुलामकरराशिस्थेसति पितुःपरदेशयानात् परदेशयात्रायांसत्यांनाशोमरणंभवेत् ४८ छ छ छ छ

अथपुनरपिपितृसहमस्यशुभाशुभफलमाह शुभइति पितृशुभमस्यशुभग्रहकृतइत्थशालयोगश्चेद्भवति पुनःपापग्रहयोगश्चेद्भवति तदा प्रथमंवर्षपूर्वार्द्धेगदस्यरोगस्यप्रकोपोऽभिवृद्धिःमहान्स्यात् पश्चाद्वर्षोत्तरार्द्धेसुखंविंदति प्राप्नोति रोगरहितोभवतीत्यर्थः नाथेपितृसहम-स्वामिनि पूर्णवीर्यैपंचदशविश्वाधिकबलेसतिनृपाद्राज्ञःसकाशात् मानयशोभिवृद्धिःस्यात् ४९ अथबंधनसहमस्यशुभाशुभफलमाह बं

शुभेत्थशालेखलखेटयोगेगदप्रकोपःप्रथमंमहान्स्यात् पश्चात्सुखंविंदतिपूर्णवीर्येनाथेनृपान्
मानयशोऽभिवृद्धिः ४९ बंधनाख्यसहमंयुतेक्षितंस्वामिनानहितदास्तिबंधनम् पापवीक्षितयुते
स्तिबंधनंपापजंमुथशिलविशेषतः ५० गौरवाख्यसहमंयुतेक्षितंस्वामिनाशुभखगैःसुखासय
राजगौरवयशोंबरासयपापवीक्षितयुतेपदक्षतिः ५१

धनेति बंधनसहमंस्वामिनायुतेक्षितंयुतंदृष्टंवातदाबंधनंका-रागृहप्राप्तिर्नास्तितद्बंधनसहमंपापग्रहेणदृष्टंयुतंतदाबंधनमस्ति पुनर्बंधनसहमस्यतत्स्वामिनोवापापग्रहकृतोमुथशिलयोगश्चेत्तदावि-शेषतोबंधनमस्ति ५० अथगौरवसहमस्यशुभाशुभफलमाह गौरवाख्येति गौरवसहमंस्वामिनाशुभग्रहैर्वायुतंदृष्टंवातदासुखासयेसुख प्राप्त्यैस्यात् राजगौरवंयशः अंबराणिवस्त्राणितेषांप्राप्तिःगौरवसहमंपापग्रहैर्युतंदृष्टंवास्यात् तदापदस्याधिकारस्यक्षतिर्नाशःस्यात् ५१

अथपुनर्गौरवसहमस्याशुभफलमाह शुभाशुभैरिति गौरवसहमंशुभपापग्रहैर्दृष्टंयुतंवातथाखलैः पापग्रहैश्चेत् कृतमुथशिलंतदापूर्वेवर्षपूर्वार्द्धे धन-
नाशंमाननाशंचविधत्तेकरोति चरमेवर्षस्योत्तरार्द्धे गौरवसहमंशुभग्रहैः कृतमुथशिलंचेत्तदासुखंवाहनशस्त्रलाभंचविधत्ते ५२ अथकर्मसहमस्य
शुभाशुभफलमाह कर्मभावेति कर्मभावः कर्मसहमंचतयोश्चाधिपौकर्मभावाधिपः कर्मसहमाधिपश्च एवंचत्वारोबलान्विताः शुभैः शुभ-
ग्रहैः स्वामिनाचकृतमुथशीलाः तदाहेमवाजिगजभूमिलाभदाःस्युः एतेकर्मभावसहमाधिपाः पापग्रहैर्दृष्टयुताः तदाअशुभदाःस्युः ५३

शुभाशुभैर्दृष्टयुतंखलैश्चेत्कृतेत्थशालंधनमाननाशम् पूर्वेविधत्तेचरमेशुभैस्त्थशालेसुखंवाहनशस्त्रलाभम् ५२ कर्मभा
वसहमाधिपाःशुभैःस्वामिनामुथशिलीबलान्विताः हेमवाजिगजभूमिलाभदाःपापदृष्टियुतितोऽशुभप्रदाः ५३ दग्धा
वक्राःकर्मवैकल्यदास्तेयुक्तादृष्टाःसौरिणातोविशेषात् राज्यभ्रंशःकर्मनाशश्चराजकर्मेशौचेन्मूसरीफोखलेन ५४

अथपुनरपिकर्मभावसहमाधिपानामशुभफलंचाह दग्धाइति कर्मभावसहमाधिपाः अस्तंगताः वक्राःवक्रगतिस्थंतदाकर्मवैकल्यदाः कर्मणःप्रा
रब्धशुभकार्यस्यवैकल्यमनिष्पत्तिस्तांददतिताद्दृशाःस्युः कर्मभावसहमाधिपाः सौरिणाशनैश्चरेणायुक्तादृष्टावातदाविशेषादवश्यमेवकर्मवै-
कल्यदाःस्युस्तदा राजकर्मेशौराजसहमेश्वरकर्मभावेश्वरौखलेनपापग्रहेणामूसरीफौकृतमूसरीफयोगौचेत्तदाराज्यभ्रंशोराज्यनाशः क-

र्मनाशश्चप्रारब्धशक्तस्यकार्यस्यनाशःस्यात् ५४ अथकेषांचित्संदिग्धार्थानांसहमानामर्थमाह उपदेष्टेति तत्रप्रथमतः गुरुसहमेगुरुशब्दोनबृ
हस्पतिःपित्रुपदेशकवाचकोस्ति तत्रप्रस्तुतेनिर्णयमाह गुरुशब्देनोपदेष्टा अध्यापकउच्यते तत्रबृहस्पतेस्तावत्सहमानयनेप्रयोजनंना
स्ति पितुःसहमंप्राथम्येनाऽभिहितंपारिशेष्यादुपदेष्टैवसमायाति विद्यासहमशब्देनज्ञानंशास्त्रशब्देनश्रुतिस्मृतीउच्येते जाड्यशब्देन-
मोहः अज्ञानमितियावत् बलशब्दः सैन्यदेहशक्त्योःप्रसिद्धः अत्रतदर्थनिर्णयमाह बलशब्देनसैन्यंदेहशक्तौतु सामर्थ्यंसहमोक्तेः

उपदेष्टागुरुर्ज्ञानंविद्याशास्त्रंश्रुतिस्मृती मोहोजाड्यंबलंसैन्यमंगंदेहोजलंद्युतिः ५५ गुरुतामंडलेशत्वंगौरवंमानशा
लिता निग्रहानुग्रहविभूराजाछत्रादिलिंगभाक् ५६

देहशब्देनअंगंशरीरमितियावत् जलशब्देनद्युतिः कांतिरिति
यावत् मुक्तादौतथोपलंभात् यथाश्रुतव्याख्यानेतुपुनरुक्तिः अथगुरुशब्दाद्भावप्रत्ययोत्पत्तौसत्यांगुरुतागौरवशब्दयोर्निष्पत्तिः अन
योरर्थस्यैकत्वात्पृथक्सहमकथनमनुचितमितिमत्वातयोर्भेदमाह गुरुतेति अत्रतुलोकप्रसिद्धिः शरणगुरुताशब्देनमंडलेशत्वंदेशस्वा
मित्वंगौरवशब्देनमानशालिताप्रतिष्ठाधिक्यम् अथराजशब्दः चंद्रक्षत्रियभूपेषुप्रसिद्धोस्ति तदर्थनिर्णयमाह निग्रहेत्यादिना अर्द्धेन-
अत्रहिलोकप्रसिद्ध्याराजशब्देनपृथ्वीश्वरएवोच्यते तल्लक्षणमाह निग्रहेति निग्रहोनाम अनिष्टकरणम् अनुग्रहोनामवांछ्यस्येष्टकरणं

तयोर्विभुः समर्थः कीदृशः छत्रादिलिंगभाक् छत्रंप्रसिद्धं आदिशब्देनचामरादियल्लिंगंचिन्हंतद्भाक्भजतीति ५६ अथमाहात्म्यसामर्थ्यशौर्याणामर्थमाह माहात्म्यमिति महतोभावोमाहात्म्यंमहत्त्वंचमंत्रगांभीर्यं मंत्रएकांतेकृतविचारस्तस्यगांभीर्यमप्रकाशता नन्वप्रकाशः कथंभवत्यतआह धृतीति धृतिर्धैर्यंबुद्धिः परिणामजाप्रज्ञा आभ्यांशालतेतत्शालियुक्तमित्यर्थः अस्यभावः शालिताएतद्रूपंमाहात्म्य

माहात्म्यंमंत्रगांभीर्यंधृतिबुद्ध्यादिशालिता सामर्थ्यंदेहजाशक्तिःशौर्यंयत्नोऽरिनिग्रहे ५७ आशेच्छोक्तामतिर्धर्म्या
श्रद्धाबंदःपराश्रयः पानीयपतनंवृष्टिर्जलेऽकस्माच्चमज्जनम् ५८ आधिव्याधीतापमांद्येसपिंडाबंधवःस्मृताः स
त्यालीकवणिग्वृत्तिराधानंप्रसवःस्मृतः ५९ दासत्वंपरकर्मोक्तमन्यत्स्पष्टंस्वनामतः निरूप्याणियथायोग्यंकुलजा
तिस्वरूपतः ६०

मित्यर्थः सामर्थ्यशब्देनदेहजाशक्तिः शौर्यशब्देनशत्रुनिग्रहेयत्नः प्रयत्नः ५७ आशाशब्देनइच्छोक्ताश्रद्धाशब्देनधर्म्यामतिः बंदशब्देनपराश्रयःपराधीनता पानीयपतनशब्देनवृष्टिः अथवाऽकस्माज्जलेमज्जनम् ५८ तापशब्देनआधिः मांद्यंनामव्याधिः शरीरपीडाकरः बंधुशब्देनसपिंडाः प्रोक्ताः वणिक्शब्देनसत्यालीकवृत्तिः सत्यासत्यवृत्त्याजीवनं प्रसवशब्देनआधानम् ५९ परकर्मशब्देनदासत्वमुक्तं अन्यत्सहमानिस्वनामतःस्पष्टानिकुलजातिस्वरूपतः यथायोग्यंनिरूप्याणि ६० ७ ७

